श्रीशिवयोगिशिवाचार्यविरचितः

# श्रीसिद्धान्तशिखामणिः

( मूलमात्रम् )

# ।।प्रथमः परिच्छेदः।।

त्रैलोक्य-सम्पदालेख्य - समुल्लेखनभित्तये।
सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः।।१।।

ब्रह्मेति व्यपदेशस्य विषयं यं प्रचक्षते।
वेदान्तिनो जगन्मूलं तं नमामि परं शिवम्।।२।।

यस्योर्मिबुद्बुदाभासः षट्त्रिंशत्-तत्त्वसञ्चयः।
निर्मलं शिवनामानं तं वन्दे चिन्महोदधिम्।।३।।

यद्भासा भासते विश्वं यत्सुखेनानुमोदते।
नमस्तस्मै गुणातीतविभवाय परात्मने।।४।।

सदाशिवमुखाशेषतत्त्वोन्मेषविधायिने ।
निष्कलङ्कस्वभावाय नमः शान्ताय शम्भवे।।५।।

स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने।
स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे।।६।।

यत्र विश्राम्यतीशत्वं स्वाभाविकमनुत्तमम्।
नमस्तस्यै महेशाय महादेवाय शूलिने।।७।।

यामाहुः सर्वलोकानां प्रकृतिं शास्त्रपारगाः।
तां धर्मचारिणीं शम्भोः प्रणमामि परां शिवाम्।।८।।

यया महेश्वरः शम्भुर्नामरूपादिसंयुतः।
तस्यै मायास्वरूपायै नमः परमशक्तये।।९।।

शिवाद्यादिसमुत्पन्नशान्त्यतीतपरोत्तराम् ।
मातरं तां समस्तानां वन्दे शिवकरीं शिवाम्।।१०।।

इच्छाज्ञानादिरूपेण या शम्भोर्विश्वभाविनी।
वन्दे तां परमानन्दप्रबोधलहरीं शिवाम्।।११।।

अमृतार्थं प्रपन्नानां या सुविद्याप्रदायिनी।
अहर्निशमहं वन्दे तामीशानमनोरमाम्।।१२।।

कश्चिदाचारसिद्धानामग्रणीः शिवयोगिनाम्।
शिवयोगीति विख्यातः शिवज्ञानमहोदधिः।।१३।।

शिवभक्तिसुधासिन्धु - जृम्भणामलचन्द्रिका।
भारती यस्य विदधे प्रायः कुवलयोत्सवम्।।१४।।

तस्य वंशो समुत्पन्नो मुक्तामणिरिवामलः।
मुद्ददेवाभिधाचार्यो मूर्धन्यः शिवयोगिनाम्।।१५।।

मुद्दानात्सर्वजन्तूनां प्रणतानां प्रबोधतः।
मुद्ददेव इति ख्याता समाख्या यस्य विश्रुता।।१६।।

तस्यासीन्नन्दनः शान्तः सिद्धनाथाभिधः शुचिः।
शिवसिद्धान्तनिर्णेता शिवाचार्यः शिवात्मकः।।१७।।

वीरशैवशिखारत्नं विशिष्टाचारसम्पदम्।
शिवज्ञानमहासिन्धुं यं प्रशंसन्ति देशिकाः।।१८।।

यस्याचार्यकुलाज्जाता सतामाचारमातृका।
शिवभक्तिः स्थिरा यस्मिन् जज्ञे विगतविप्लवा।।१९।।

तस्य वीरशिवाचार्य-शिखारत्नस्य नन्दनः।
अभवच्छिवयोगीति सिन्धोरिव सुधाकरः।।२०।।

चिदानन्दपराकाश - शिवानुभव - योगतः।
शिवयोगीति नामोक्तिर्यस्य याथार्थ्ययोगिनी।।२१।।

शिवागमपरिज्ञानपरिपाकसुगन्धिना ।
यदीयकीर्तिपुष्पेण वासितं हरितां मुखम्।।२२।।

येन रक्षावती जाता शिवभक्तिः सनातनी।
बौद्धादिप्रतिसिद्धान्त-महाध्वान्तांशुमालिना।।२३।।

स महावीरशैवानां धर्ममार्गप्रवर्तकः।
शिवतत्त्वपरिज्ञानचन्द्रिकावृतचन्द्रमाः ।।२४।।

आलोक्य सर्वतन्त्राणि कामिकाद्यानि सादरम्।
वातुलान्तानि शैवानि पुराणान्यखिलानि तु।।२५।।

वेदमार्गाविरोधेन विशिष्टाचारसिद्धये।
असन्मार्गनिरासाय प्रमोदाय विवेकिनाम्।।२६।।

सर्वस्वं वीरशैवानां सकलार्थप्रकाशनम्।
अस्पृष्टमखिलैर्दोषैरादृतं शुद्धमानसैः।।२७।।

तेष्वागमेषु सर्वेषु पुराणेष्वखिलेषु च।
पुरा देवेन कथितं देव्यै तन्नन्दनाय च।।२८।।

तत्सम्प्रदायसिद्धेन रेणुकेन महात्मना।
गणेश्वरेण कथितमगस्त्याय पुनः क्षितौ।।२९।।

वीरशैव – महातन्त्रमेकोत्तरशतस्थलम्।
अनुग्रहाय लोकानामभ्यधात् सुधियांवरः।।३०।।

सर्वेषां शैवतन्त्राणामुत्तरत्वान्निरुत्तरम्।

नाम्ना प्रतीयते लोके तत्सिद्धान्तशिखामणिः।।३१।।

अनुगतसकलार्थे शैवतन्त्रैः समस्तैः
प्रकटितशिवबोधाद्वैतभावप्रसादे ।
विदधतु मतिमस्मिन् वीरशैवा विशिष्टाः
पशुपतिमतसारे पण्डितश्लाघनीये।।३२।।

## ।।द्वितीयः परिच्छेदः।।

सच्चिदानन्दरूपाय सदसद्व्यक्तिहेतवे।
नमः शिवाय साम्बाय सगणाय स्वयम्भुवे।।१।।

सदाशिवमुखाशेषतत्त्वमौक्तिक - शुक्तिकाम्।
वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम्।।२।।

अस्ति सच्चित्सुखाकारमलक्षणपदास्पदम्।
निर्विकल्पं निराकारं निरस्ताशेषविप्लवम्।।३।।

परिच्छेदकथाशून्यं प्रपञ्चातीतवैभवम्।
प्रत्यक्षादिप्रमाणानामगोचरपदे स्थितम्।।४।।

स्वप्रकाशं विराजन्तमनामयमनौपमम्।
सर्वज्ञं सर्वगं शान्तं सर्वशक्तिं निरङ्कुशम्।।५।।

शिवरुद्रमहादेवभवादिपद - संज्ञितम्।
अद्वितीयमनिर्देश्यं परं ब्रह्म सनातनम्।।६।।

तत्र लीनमभूत् पूर्वं चेतनाचेतनं जगत्।
स्वात्मलीनं जगत्कार्यं स्वप्रकाश्यं तदद्भुतम्।।७।।

शिवाभिधं परं ब्रह्म जगन्निर्मातुमिच्छया।
स्वरूपमादधे किञ्चित् सुखस्फूर्तिविजृम्भितम्।।८।।

निरस्तदोषसम्बन्धं निरुपाधिकमव्ययम्।
दिव्यमप्राकृतं नित्यं नीलकण्ठं त्रिलोचनम्।।९।।

चन्द्रार्धशेखरं शुद्धं शुद्धस्फटिकसन्निभम्।
शुद्धमुक्ताफलाभासमुपास्यं गुणमूर्तिभिः।।१०।।

विशुद्धज्ञानकरणं विषयं सर्वयोगिनाम्।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसमप्रभम्।।११।।

अप्राकृतगुणाधारमनन्तमहिमास्पदम् ।।१२।।

तदीया परमा शक्तिः सच्चिदानन्दलक्षणा।
समस्त - लोकनिर्माणसमवायस्वरूपिणी।।
तदिच्छयाभवत् साक्षात् तत्स्वरूपानुसारिणी।।१२।।

जगत्सिसृक्षुः प्रथमं ब्रह्माणं सर्वदेहिनाम्।
कर्तारं सर्वलोकानां विदधे विश्वनायकः।।१३।।

तस्मै प्रथमपुत्राय शङ्करः शक्तिमान् विभुः।
सर्वज्ञः सकला विद्याः सानुग्रहमुपादिशत्।।१४।।

समस्तलोकान् निर्मातुं समुद्यपरोऽभवत्।
कृतोद्योगोऽपि निर्माणे जगतां शङ्कराज्ञया।।
अज्ञातोपायसम्पत्तेरभवन्माययावृतः ।।१५।।

विधातुमखिलान् लोकानुपायं प्राप्तुमिच्छया।
पुनस्तं प्रार्थयामास देवदेवं त्रियम्बकम्।।१६।।

नमस्ते देवदेवेश नमस्ते करुणाकर।
अस्मदादि – जगत्सर्वनिर्माणनविधिक्षम।।१७।।

उपायं वद मे शम्भो जगत्स्रष्टः! जगत्पते।
सर्वज्ञः सर्वशक्तिस्त्वं सर्वकर्ता सनातनः।।१८।।

इति सम्प्रार्थितः शम्भुर्ब्रह्मणा विश्वनायकः।
उपायमवदत्तस्मै लोकसृष्टिप्रवर्तनम्।।१९।।

उपायमीश्वरेणोक्तं लब्ध्वापि चतुराननः।
न समर्थोऽभवत् कर्तुं नानारूपमिदं जगत्।।२०।।

पुनस्तं प्रर्थयामास ब्रह्मा विह्वलमानसः।
देवदेव महादेव जगत्प्रथमकारण।।२१।।

नमस्ते सच्चिदानन्द स्वेच्छाविग्रहराजित!।
भव शर्व महेशान सर्वकारणकारण!।।२२।।

भवदुक्तो ह्युपायो मे न किञ्चिज्ज्ञायतेऽधुना।
सृष्टिं विधेहि भगवन् प्रथमं परमेश्वर!।।
ज्ञातोपायस्ततः कुर्यां जगत्सृष्टिमुमापते!।।२३।।

इत्येवं प्रार्थितः शम्भुर्ब्रह्मणा विश्वयोनिना।
ससर्जात्मसमप्रख्यान् सर्वगान् सर्वशक्तिकान्।।२४।।

प्रबोधपरमानन्दपरिवाहितमानसान् ।
प्रमथान् विश्वनिर्माणप्रलयापादनक्षमान्।।२५।।

तेषु प्रमथवर्गेषु सृष्टेषु परमात्मना।
रेणुको दारुकश्चेति द्वावभूतां शिवप्रियौ।।२६।।

सर्वविद्याविशेषज्ञौ सर्वकार्यविचक्षणौ।
मायामलविनिर्मुक्तौ महिमातिशयोज्ज्वलौ।।२७।।

आत्मानन्दपरिस्फूर्तिरसास्वादनलम्पटौ ।
शिवतत्त्वपरिज्ञानतिरस्कृतभवामयौ ।।२८।।

नानापथमहाशैवतन्त्रनिर्वाहतत्परौ ।
वेदान्तसारसर्वस्वविवेचनविचक्षणौ।।२९।।

नित्यसिद्धौ निरातङ्कौ निरङ्कुशपराक्रमौ।
तादृशौ तौ महाभागौ संवीक्ष्य परमेश्वरः।।३०।।

समर्थौ सर्वकार्येषु विश्वासपरमाश्रितौ।
अन्तःपुरद्वारपालौ निर्ममे नियतौ विभुः।।३१।।

गणेश्वरौ रेणुकदारुकावुभौ
        विश्वासभूतौ नवचन्द्रमौलेः।
अन्तःपुरद्वारगतौ सदा तौ
        वितेनतुर्विश्वपतेस्तु सेवाम्।।३२।।

## ।।तृतीयः परिच्छेदः।।

कदाचिदथ कैलासे कलधौतशिलामये।
गन्धर्ववामनयनाक्रीडामौक्तिक - दर्पणे।।१।।

मन्दारवकुलाशोकमाकन्दप्रायभू - रुहे।
मल्लीमरन्दनिःष्यन्दपानपीनमधुव्रते ।।२।।

कुङ्कुमस्तबकामोदकूलङ्कषहरिन्मुखे ।
कलकण्ठकुलालापकन्दलद्रागबन्धुरे ।।३।।

किन्नरीगीतमाधुर्यपरिवाहितगह्वरे ।
सानन्दवरयोगीन्द्रवृन्दालङ्कृतकन्दरे ।।४।।

हेमारविन्दकलिकासुगन्धिरसमानसे ।
शातकुम्भमयस्तम्भशतोत्तुङ्ग-विराजिते ।।५।।

माणिक्यदीपकलिका-मरीचिद्योतितान्तरे ।
द्वार - तोरणसंरूढशङ्खपद्मनिधिद्वये ।।६।।

मुक्तातारकितोदारवितानाम्बर - मण्डिते।
स्पर्शलक्षितवैडूर्यमयभित्ति - परम्परे।।७।।

सञ्चरत्प्रमथश्रेणी - पदवाचालनूपुरे।
प्रवालवलभी - शृङ्ग - शृङ्गारमणिमण्डपे।।८।।

वन्दारुदेवमुकुटमन्दाररसवासितम् ।
रत्नसिंहासनं दिव्यमध्यस्तं परमेश्वरम्।।९।।

तमास्थानगतं देवं सर्वलोकमहेश्वरम्।
त्रय्यन्तकमलारण्य - विहारकल - हंसकम्।।१०।।

उदारगुणमोङ्कारशुक्तिकापुटमौक्तिकम् ।
सर्वमङ्गलसौभाग्यसमुदाय - निकेतनम्।।११।।

संसारविषमूर्च्छालु - जीवसञ्जीवनौषधम्।
नित्यप्रकाशनैर्मल्यकैवल्य - सुरपादपम्।।१२।।

अनन्तपरमानन्दमकरन्दमधुव्रतम् ।
आत्मशक्तिलतापुष्यत्त्रिलोकीपुष्पकोरकम् ।।१३।।
ब्रह्माण्डकुण्डिकाषण्ड-पिण्डीकरण-पण्डितम्।
समस्तदेवताचक्रचक्रवर्तिपदे स्थितम्।।१४।।

चन्द्रबिम्बायुतच्छायादायादद्युतिविग्रहम् ।
माणिक्यमुकुटज्योतिर्मञ्जरी - पिञ्जराम्बरम्।।१५।।

चूडालं सोमकलया सुकुमारबिसाभया।
कल्याण - पुष्पकलिका - कर्णपूरमनोहरम्।।१६।।

मुक्तावलयसम्बद्धमुण्डमाला - विराजितम्।
पर्याप्तचन्द्रसौन्दर्य - परिपन्थि - मुखश्रियम्।।१७।।

प्रातःसम्फुल्ल - कमलपरियायत्रिलोचनम्।
मन्दस्मितमितालाप - मधुराधरपल्लवम्।।१८।।

गाण्डमण्डलपर्यन्त - क्रीडन्मकरकुण्डलम्।
कालिम्ना कालकूटस्य कण्ठनाले कलङ्कितम्।।१९।।

मणिकङ्कणकेयूर - मरीचिकरपल्लवैः।
चतुर्भिः सविराजन्तं बाहुमन्दारशाखिभिः।।२०।।

गौरीपयोधराश्लेषकृतार्थ - भुजमध्यमम्।
सुवर्णब्रह्मसूत्राङ्कं सूक्ष्मकौशेयवाससम्।।२१।।

नाभिस्थानावलम्बिन्या नवमौक्तिकमालया।
गङ्गयेव कृताश्लेषं मौलिभागावतीर्णया।।२२।।

पदेन मणिमञ्जीरप्रभा - पल्लवितश्रिया।
चन्द्रवत् स्फाटिकं पीठं समावृत्य स्थितं पुरः।।२३।।

वामपार्श्वनिवासिन्या मङ्गलप्रियवेषया।
समस्तलोकनिर्माणसमवायस्वरूपया ।।२४।।

इच्छाज्ञानक्रियारूपबहु - शक्तिविलासया।
विद्यातत्त्वप्रकाशिन्या विनाभावविहीनया।।२५।।

संसारविषकान्तारदाहदावाग्निलेखया ।
धम्मिल्लमल्लिकामोदझङ्कुर्वद्भृङ्गमालया ।।२६।।

सम्पूर्णचन्द्रसौभाग्य - संवादिमुखपद्मया ।
नासामौक्तिकलावण्यनाशीरस्मितशोभया ।।२७।।

मणिताटङ्करङ्गान्तर्वलितापाङ्गलीलया ।
नेत्र - द्वितयसौन्दर्य - निन्दितेन्दीवरत्विषा ।।२८।।

कुसुमायुधकोदण्डकुटिलभ्रूविलासया ।
बन्धूककुसुमच्छायाबन्धुभूताधरश्रिया ।।२९।।

कण्ठनालजितानङ्गकम्बु - बिब्बोकसम्पदा।
बाहुद्वितयसौभाग्य - वञ्चितोत्पलमालया।।३०।।

स्थिरयौवनलावण्य श्रृङ्गारितशरीरया।

अत्यन्तकठिनोत्तुङ्गपीवरस्तनभारया ।।३१।।

मृणालवल्लरीतन्तुबन्धुभूतावलग्नया ।
शृङ्गारतटिनीतुङ्ग - पुलिन - श्रोणिभारया।।३२।।

कुसुम्भकुसुमच्छायाकोमलाम्बरशोभया ।
शृङ्गारोद्यानसंरम्भरम्भास्तम्भोरुकाण्डया ।।३३।।

चूतप्रवालसुषमा - सुकुमारपदाब्जया।
स्थिरमङ्गलशृङ्गारभूषणालङ्कृताङ्गया ।।३४।।

हारनूपुरकेयूर - चमत्कृतशरीरया।
चक्षुरानन्दलतया सौभाग्यकुल - विद्यया।।३५।।

उमया सममासीनं लोकजालकुटुम्बया।
अपूर्वरूपमभजन् परिवाराः समन्ततः।।३६।।

पुण्डरीकाकृतिं स्वच्छं पूर्णचन्द्रसहोदरम्।
दधौ तस्य महालक्ष्मीः सितमातपवारणम्।।३७।।

तन्त्रीझङ्कारशालिन्या सङ्गीतामृतविद्यया।
उपतस्थे महादेवमुपान्ते च सरस्वती।।३८।।

झणत्कङ्कण - जातेन हस्तेनोपनिषद्वधूः।
ओंकारतालवृन्तेन वीजयामास शङ्करम्।।३९।।

चलच्चामरिकाहस्ता झङ्कुर्वन्मणिकङ्कणाः।
आसेवन्त तमीशानमभितो दिव्यकन्यकाः।।४०।।

चामराणां विलोलानां मध्ये तन्मुखमण्डलम्।
रराज राजहंसानां भ्रमतामिव पङ्कजम्।।४१।।

मन्त्रेण तमसेवन्त वेदाः साङ्गविभूतयः।
भक्त्या चूडामणिं कान्तं वहन्त इव मौलिभिः।।४२।।

तदीयायुधधारिण्यस्तत्समान - विभूषणाः।
अङ्गभूताः स्त्रियः काश्चिदासेवन्त तमीश्वरम्।।४३।।

आप्ताधिकारिणः केचिदनन्तप्रमुखा अपि।
अष्टौ विद्येश्वरा देवमभजन्त समन्ततः।।४४।।

ततो नन्दी महाकालश्चण्डो भृङ्गी रिटिस्तथा।
घण्टाकर्णः पुष्पदन्तः कपाली वीरभद्रकः।।४५।।

एवमाद्या महाभागा महाबलपराक्रमाः।
निरङ्कुशमहासत्त्वा भेजिरे तं महेश्वरम्।।४६।।

अणिमादिकमैश्वर्यं येषां सिद्धेरपोहनम्।
ब्रह्मादयः सुरा येषामाज्ञालङ्घनभीरवः।।४७।।

मोक्षलक्ष्मीपरिष्वङ्गमुदिता येऽन्तरात्मना।
येषामीषत्करं विश्वसर्गसंहारकल्पनम्।।४८।।

ज्ञानशक्तिः परा येषां सर्ववस्तु-प्रकाशिनी।
आनन्दकणिका येषां हरिब्रह्मादि-सम्पदः।।४९।।

आकाङ्क्षन्ते पदं येषां योगिनो योगतत्पराः।
काङ्क्षणीयफलो येषां सङ्कल्पः कल्पपादपः।।५०।।

कर्मकालादिकार्पण्यचिन्ता येषां न विद्यते।।
येषां विक्रमसन्नाहा मृत्योरपि च मृत्यवः।।५१।।

ब्रह्मोपेन्द्रमहेन्द्राद्या विश्वतन्त्राधिकारिणम्।
आयुधालङ्कृतप्रान्ताः परितस्तं सिषेविरे।।५२।।

आदित्या वसवो रुद्रा यक्षगन्धर्वकिन्नराः।
दानवा राक्षसा दैत्याः सिद्धा विद्याधरोरगाः।।
अभजन्त महादेवमपरिच्छिन्न - सैनिकाः।।५३।।

वसिष्ठो वामदेवश्च पुलस्त्यागस्त्य-शौनकाः।
दधीचिर्गौतमश्चैव सानन्दशुकनारदाः।।५४।।

उपमन्युभृगुव्यासपाराशरमरीचयः ।
इत्याद्या मुनयः सर्वे नीलकण्ठं सिषेविरे।।५५।।

पार्श्वस्थ-परिवाराणां विमलाङ्गेषु बिम्बितः।
सर्वान्तर्गतमात्मानं स रेजे दर्शयन्निव।।५६।।

क्षणं स शम्भुर्देवानां कार्यभागं निरूपयन्।
क्षणं गन्धर्वराजानां गानविद्यां विभावयन्।।५७।।

ब्रह्मविष्ण्वादिभिर्देवैः क्षणमालापमाचरन्।
क्षणं देवमृगाक्षीणां लालयन् नृत्यविभ्रमम्।।५८।।

व्यासादीनां क्षणं कुर्वन् वेदोच्चारेषु गौरवम्।
विदधानः क्षणं देव्या मुखे बिम्बाधरे दृशः।।५९।।

हास्यनृत्यं क्षणं पश्यन् भृङ्गिणा परिकल्पितम्।
नन्दिना वेत्रहस्तेन सर्वतन्त्राधिकारिणा।।६०।।

अमुञ्चता सदा पार्श्वमात्माभिप्रायवेदिना।
चोदयन् वासयन् कांश्चिद्विसृजन् भ्रूविलासतः।।
संभावयंस्तथा चान्यानन्यानपि नियामयन्।।६१।।

समस्तभुवनाधीश - मौलिलालितशासनः।
अकुण्ठ - शक्तिरव्याजलावण्यललिताकृतिः।।६२।।

स्थिर - यौवनसौरभ्यशृङ्गारित - कलेवरः।
आत्मशक्त्यमृतास्वादरसोल्लासित - मानसः।।६३।।

स्वाभाविकमहैश्वर्यविश्रामपरमावधिः ।
निष्कलङ्कमहासत्त्वनिर्मितानेकविग्रहः ।।६४।।

अखण्डारातिदोर्दण्डकण्डूखण्डनपण्डितः।
चिन्तामणिः प्रपन्नानां श्रीकण्ठः परमेश्वरः।।६५।।

सभान्तरगतं तन्त्रं रेणुकं गणनायकम्।
प्रसादं सुलभं दातुं ताम्बूलं स तमाह्वयत्।।६६।।

शम्भोराह्वानसन्तोषसम्भ्रमेणैव दारुकम्।
उल्लङ्घ्य पार्श्वमगमल्लोकनाथस्य रेणुकः।।६७।।

तमालोक्य विभुस्तत्र समुल्लङ्घितदारुकम्।
माहात्म्यं निजभक्तानां द्योतयन्निदमब्रवीत्।।६८।।

रे रे रेणुक दुर्बुद्धे कथमेष त्वयाधुना?।
उल्लङ्घितः सभामध्ये मम भक्तो हि दारुकः।।६९।।

लङ्घनं मम भक्तानां परमानर्थकारणम्।
आयुः श्रियं कुलं कीर्तिं निहन्ति हि शरीरिणाम्।।७०।।

मम भक्तमवज्ञाय मार्कण्डेयं पुरा यमः।
मत्पादताडनादासीत्  स्मरणीयकलेवरः।।४१।।

भृगोश्च शङ्कुकर्णस्य मम भक्तिमतोस्तयोः।
कृत्वानिष्टमभूद् विष्णुर्विकेशो दशयोनिभाक्।।७२।।

मद्भक्तेन दधीचेन कृत्वा युद्धं जनार्दनः।
भग्नचक्रायुधः पूर्वं पराभवमुपागमत्।।७३।।

कृताश्वमेधो दक्षोऽपि मद्भक्तांश्च गणेश्वरान्।
अवमत्य सभामध्ये मेषावक्त्रोऽभवत्पुरा।।७४।।

श्वेतस्य मम भक्तस्य दुरतिक्रमतेजसः।
औदासीन्येन कालोऽपि मया दग्धः पुराभवत्।।७५।।

एवमन्येऽपि बहवो मद्भक्तानामतिक्रमात्।
परिभूता हताश्चासन् भक्ता मे दुरतिक्रमाः।।७६।।

अविचारेण मद्भक्तो लङ्घितो दारुकस्त्वया।

एष त्वं रेणुकानेन जन्मवान् भव भूतले।।७७।।

इत्युक्तः परमेशेन भक्तमाहात्म्यशंसिना।
प्रार्थयामास देवेशं प्रणिपत्य स रेणुकः।।७८।।

मानुषीं योनिमासाद्य महादुःखविवर्धिनीम्।
जात्यायुर्भोगवैषम्यहेतुकर्मोपपादिनीम् ।।७९।।

समस्त देवकैङ्कर्यकार्पण्य - प्रसवस्थलीम्।
महातापत्रयोपेतां वर्णाश्रमनियन्त्रिताम्।।
विहाय त्वत्पदाम्भोजसेवां किं वा वसाम्यहम्?।।८०।।

यथा मे मानुषो भावो न भवेत् क्षितिमण्डले।
तथा प्रसादं देवेश विधेहि करुणानिधे!।।८१।।

इति सम्प्रार्थितो देवो रेणुकेन महेश्वरः।
मा भैषीर्मम भक्तानां कुतो भीतिरिहेष्यति?।।८२।।

श्रीशैलस्योत्तरे भागे त्रिलिङ्गविषये शुभे।
कोल्लिपाक्यभिधानोऽस्ति कोऽपि ग्रामो महत्तरः।।८३।।

सोमेश्वराभिधानस्य तत्र वासवतो मम।
अस्पृशन् मानुषं भावं लिङ्गात् प्रादुर्भविष्यसि।।८४।।

मदीयलिङ्गसम्भूतं मद्भक्तपरिपालकम्।
विस्मिता मानुषाः सर्वे त्वां भजन्तु मदाज्ञया।।८५।।

मदद्वैतपरं शास्त्रं वेदवेदान्तसम्मतम्।
मम प्रतापमतुलं मद्भक्तानां विशेषतः।
प्रकाशय महीभागे वेदमार्गानुसारतः।।८७।।

इत्युक्त्वा परमेश्वरः स भगवान् भद्रासनादुत्थितो
ब्रह्मोपेन्द्रमुखान् विसृज्य विबुधान् भ्रूसंज्ञया केवलम्।
पार्वत्या सहितो गणैरभिमतैः प्राप स्वमन्तःपुरं
क्षोणीभागमवातरत् पशुपतेराज्ञावशाद्रेणुकः।।८८।।

# ।।चतुर्थः परिच्छेदः।।

## ।।श्रीसोमेश्वरलिङ्गादाविर्भूतस्य श्रीरेणुकगणाधीश्वरस्य वर्णनम्।।

अथ त्रिलिंगविषये कोल्लिपाक्यभिधे पुरे।
सोमेश्वरमहालिङ्गात् प्रादुरासीत् स रेणुकः।।१।।

प्रादुर्भूतं तमालोक्य शिवलिङ्गात् त्रिलिङ्गजाः।
विस्मिताः प्राणिनः सर्वे बभूवुरतितेजसम्।।२।।

भस्मोद्धूलितसर्वाङ्गं सारुद्राक्षभूषणम्।
जटामुकुट-संयुक्तं त्रिपुण्ड्राङ्कितमस्तकम्।।३।।

कटीतटीपटीभूतकन्यापटलबन्धुरम् ।
दधानं योगदण्डञ्च भस्माधारं कमण्डलुम्।।४।।

शिवाद्वैतपरिज्ञान - परमानन्दमोदिनम्।
निर्धूत - सर्वसंसारवासनादोषपञ्जरम्।।५।।

शिवागमसुधासिन्धु - समुन्मेषसुधाकरम्।
चित्तारविन्दसङ्गूढ - शिवपादाम्बुजद्वयम्।।६।।

यमादियोगतन्त्रज्ञं स्वतन्त्रं सर्वकर्मसु।
समस्तसिद्धसन्तान – समुदायशिखामणिम्।।७।।

शैवसिद्धान्तनिर्वाहकृतपट्टनिबन्धनम् ।
आलोकमात्र-निर्भिन्न-समस्तप्राणिपातकम्।।८।।

तमपृच्छन् जनाः सर्वे नमन्तः को भवानिति।
इति पृष्टो महायोगी जनैर्विस्मितमानसैः।।९।।

प्रत्युवाच शिवाद्वैतमहानन्दपरायणः।
पिनाकिनः पार्श्ववर्ती रेणुकाख्यगणेश्वरः।।१०।।

केनचित्कारणेनाहं शिवलिङ्गादिहाभवम्।
नाम्ना रेणुकसिद्धोऽहं सिद्धसन्ताननायकः।।११।।

स्वच्छन्दचारी लोकेऽस्मिन् शिवसिद्धान्तपालकः।
खण्डयन् जैनचार्वाकबौद्धादीनां दुरागमान्।।१२।।

इत्युक्त्वा पश्यतां तेषां विषयस्थिरचक्षुषाम्।
उत्थाय व्योममार्गेण मलयाद्रिमुपागमत्।।१३।।

नवचन्दनकान्तारकन्दलन्मन्दमारुतम् ।
अभङ्गुरभुजङ्गस्त्री - सङ्गीत-रस-सङ्कुलम्।।१४।।

करिपोतकराकृष्ट – स्फुरदेलातिवासितम्।
वराहदंष्ट्रिकाध्वस्त - मुस्तासुरभिकन्दरम्।।१५।।

पटीरदलपर्यङ्कप्रसुप्तव्याधदम्पतिम् ।
माधवीमल्लिकाजातिमञ्जरीरेणुरञ्जितम् ।।१६।।

तत्र कुत्रचिदाभोग सर्वर्तुकुसुमद्रुमे।
अपश्यदाश्रमं दिव्यमगस्त्यस्य महामुनेः।।१७।।

मन्दारचन्दनप्रायैर्मण्डितं तरुमण्डलैः।
शाखाशिखर – संलीनतारकागणकोरकैः।।१८।।

मुनिकन्याकरानीतकलशाम्बु - विवर्धितैः।
आलवालजलास्वादमोदमानमृगीगणैः ।।१९।।

हेमारविन्दनिष्यन्दमकरन्दसुगन्धिभिः ।
मरालालापवाचालुवीचिमालामनोहरैः ।।२०।।

इन्दीवरवरज्योतिरन्धीकृतहरिन्मुखैः ।
लोपामुद्रापदन्यासचरितार्थं तटाङ्कितैः।।२१।।

हारनीहारकर्पूरहरहासामलोदकैः ।
नित्यनैमित्तिकस्नाननियमार्थैस्तपस्विनाम् ।।२२।।

प्रकृष्टमणिसोपानैः परिवीतं सरोवरैः।
विमुक्तसत्त्ववैरस्यं ब्रह्मलोकमिवापरम्।।२३।।

हूयमानाज्यसन्तानधूमगन्धिमहास्थलम् ।
शुकसंसत्समारब्ध - श्रुतिशास्त्रोपबृंहणम्।।२४।।

तस्य मध्ये समासीनं मूले चन्दनभूरुहः।
सुकुमारदलच्छायादूरितादित्यतेजसः ।।२५।।

तडित्पिङ्गजटाभारैस्त्रिपुण्ड्राङ्कितमस्तकैः ।
भस्मोद्धूलितसर्वाङ्गैः स्फुरद्रुद्राक्षभूषणैः।।२६।।

नववल्कलवासोभिर्नानानियममधारिभिः ।
परिवीतं मुनिगणैः प्रमथैरिव शङ्करम्।।२७।।

समुज्ज्वलज्जटाजालैस्तपः - पादपपल्लवैः।
स्फुरत्सौदामिनीकल्पैर्ज्वालाजालैरिवातलम् ।।२८।।

तडित्पिङ्गजटाभारैस्त्रिपुण्ड्राङ्कित - मस्तकैः।
भस्मोद्धूलितसर्वाङ्गैः स्फुरद्रुद्राक्षभूषणैः।।२६।।

नववल्कलवासोभिर्नानानियममधारिभिः ।

परिवीतं मुनिगणैः प्रमथैरिव शङ्करम्।।२७।।

समुज्ज्वलज्जटाजालैस्तपः - पादपपल्लवैः।
स्फुरत्सौदामिनीकल्पैर्ज्वालाजालैरिवातलम्।।२८।।

विशुद्धभस्मकृतया त्रिपुण्ड्राङ्कितरेखया।
त्रिस्त्रोतसेव सम्बद्धशिलाभागं हिमालयम्।।२९।।

भस्मालङ्कृतसर्वाङ्गं शशाङ्कमिव भूगतम्।
वसानं वल्कलं नव्यं बालातपसमप्रभम्।।३०।।

वडवाग्निशिखाजाल - समालीढमिवार्णवम्।
सर्वासामपि विद्यानां समुदायनिकेतनम्।।३१।।

न्यक्कृतप्राकृताहन्तं निरूढशिवभावनम्।
तृणीकृतजगज्जालं सिद्धीनामुदयस्थलम्।।३२।।

मोहान्धकारतपनं मूलबोधमहीरुहम्।
ददर्श स महायोगी मुनिं कलशसम्भवम्।।३३।।

तमागतं महासिद्धं समीक्ष्य कलशोद्भवः।
गणेन्द्रं रेणुकाभिख्यं विवेद ज्ञानचक्षुषा।।३४।।

तस्यानुभावं विज्ञाय सहसैव समुत्थितः।
लोपामुद्राकरानीतै रुद्रकैरतिपावनैः।।
पादौ प्रक्षालयामास स तस्य शिवयोगिनः।।३५।।

सम्पूज्य तं यथाशास्त्रं तन्नियोगपुरःसरम्।
मुनिर्विनयसम्पन्नो निषसादासनान्तरे।।३६।।

समासीनं मुनिवरं सर्वतेजस्विनां विभुम्।
उवाच शान्तया वाचा रेवणः सिद्धशेखरः।।३७।।

निर्विघ्नं वर्तसे किं नु नित्या ते नियमक्रिया?।
अथवागस्त्य तेजस्विन् कुतः स्युस्तेऽन्तरायकाः?।।३८।।

विन्ध्यो निरुद्धो भवता विश्वोल्लङ्घनविभ्रमः।
नहुषो शेषलेशात् ते सद्यः सर्पत्वमागतः।।३९।।

आचान्ते भवता पूर्वं पङ्कशेषाः पयोधयः।
जीर्णस्ते जाठरे वह्नौ दृप्तो वातापि-दानवः।।४०।।

एवंविधानां चित्राणां सर्वलोकातिशायिनाम्।
कृत्यानां तु भवान् कर्ता कस्तेऽगस्त्य समप्रभः?।।४१।।

शिवाद्वैतपरानन्दप्रकाशन परायणम्।

भवन्तमेकं शंसन्ति प्रकृत्या सङ्गवर्जितम्।।४२।।

पुरा हैमवतीसूनुरवदत् ते षडाननः।
शिवधर्मोत्तरं नाम शास्त्रमीश्वरभाषितम्।।४३।।

भक्तिः शैवी महाघोरसंसारभयहारिणी।
त्वया राजन्वती लोके जातागस्त्य महामुने।।४४।।

इति तस्य वचः श्रुत्वा सिद्धस्य मुनिपुङ्गवः।
गम्भीरगुणया वाचा बभाषे भक्तिपूर्वकम्।।४५।।

अहमेव मुनीन्द्राणां लालनीयोऽस्मि सर्वदा।
भवदागमसम्पत्तिर्मां विना कस्य सम्भवेत्?।।४६।।

स्थिरमद्य शिवज्ञानं स्थिरा मे तापसक्रिया।
भवद्दर्शनपुण्येन स्थिरा मे मुनिराजता।।४७।।

संसारसर्पदष्टानां मूर्छितानां शरीरिणाम्।
कटाक्षस्तव कल्याणं समुज्जीवनभेषजम्।।४८।।

समस्तलोकसन्दाहतापत्रयमहानलः ।
त्वत्पादाम्बुकणास्वादादुपशाम्यति देहिनाम्।।४९।।

रेणुकं त्वां विजानामि गणनाथं शिवप्रियम्।
अवतीर्णमिमां भूमिं मदनुग्रहकाङ्क्षया।।५०।।

भवादृशानां सिद्धानां प्रबोधध्वस्तजन्मनाम्।
प्रवृत्तिरीदृशी लोके परानुग्रहकारिणी।।५१।।

त्वन्मुखाच्छ्रोतुमिच्छामि सिद्धान्तं श्रुतिसम्मतम्।
सर्वज्ञ वद मे साक्षाच्छैवं सर्वार्थसाधकम्।।५२।।

सद्यः सिद्धिकरं पुंसां सर्वयोगीन्द्रसेवितम्।
दुराचारैरनाघ्रातं स्वीकृतं वेदवेदिभिः।
शिवात्मैक्य - महाबोधसम्प्रदायप्रवर्तकम्।।५३।।

उक्त्वा भवान् सकललोकमहोपकारं
सिद्धान्तसङ्ग्रहमनाहतबाह्यतन्त्रम् ।
सद्यः कृतार्थयितुमर्हसि दिव्ययोगिन्
नानागमश्रवणवर्तित - संशयं माम्।।५४।।

## ।।पञ्चमः परिच्छेदः।।

अथागस्त्यवचः श्रुत्वा रेणुको गणनायकः।
ध्यात्वा क्षणं महादेवं साम्बमाह समाहितः।।१।।

अगस्त्य मुनिशार्दूल समस्तागमपारग!।
शिवज्ञानकरं वक्ष्ये सिद्धान्तं श्रृणु सादरम्।।२।।

अगस्त्य खलु सिद्धान्ता विख्याता रुचिभेदतः।
भिन्नाचारसमायुक्ता भिन्नार्थप्रतिपादकाः।।३।।

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।४।।

वेदः प्रधानं सर्वेषां सांख्यादीनां महामुने।
वेदानुसरणादेषां प्रामाण्यमिति निश्चितम्।।५।।

पाञ्चरात्रस्य सांख्यस्य योगस्य च तथा मुने।
वेदैकदेशवर्तित्वं शैवं वेदमयं मतम्।।६।।

वेदैकदेशवर्तिभ्यः सांख्यादिभ्यो महामुने!।
सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते।।७।।

शैवतन्त्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रामाण्यं वेदवत् सदा।।८।।

आगमा बहुधा प्रोक्ताः शिवेन परमात्मना।
शैवं पाशुपतं सोमं लाकुलञ्चेति भेदतः।।९।।

तेषु शैवं चतुर्भेदं तन्त्रं सर्वविनिश्चितम्।
वामञ्च दक्षिणञ्चैव मिश्रं सिद्धान्तसंज्ञकम्।।१०।।

शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम्।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम्।।११।।

वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः।
वेदबाह्यविरोधित्वाद् वेदसम्मत उच्यते।।१२।।

वेदसिद्धान्तयोरैक्यमेकार्थप्रतिपादनात् ।
प्रामाण्यं सदृशं ज्ञेयं पण्डितैरेतयोः सदा।।१३।।

सिद्धान्ताख्ये महातन्त्रे कामिकाद्ये शिवोदिते।
निर्दिष्टमुत्तरे भागे वीरशैवमतं परम्।।१४।।

विद्यायां शिवरूपायां विशेषाक्रमणं यतः।
तस्मादेते महाभागा वीरशैवा इति स्मृताः।।१५।।

वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिका।
तस्यां रमन्ते ये शैवा वीरशैवास्तु ते मताः।।१६।।

विद्यायां रमते यस्मान्मायां हेयां श्ववद् दहेत्।
अनेनैव निरुक्तेन वीरमाहेश्वरः स्मृतः।।१७।।

वेदान्तजन्यं यज्ज्ञानं विद्येति परिकीर्त्यते।
विद्यायां रमते तस्यां वीर इत्यभिधीयते।।१८।।

शैवैर्माहेश्वरैश्चैव कार्यमतर्न्बहिः क्रमात्।
शिवो महेश्वरश्चेति नात्यन्तमिह भिद्यते।।१९।।

यथा तथा न भिद्यन्ते शैवा माहेश्वरा अपि।
शिवाश्रितेषु ते शैवा ज्ञानयज्ञरता नराः।।२०।।

माहेश्वराः समाख्याताः कर्मयज्ञरता भुवि।
तस्मादभ्यन्तरे कुर्युः शैवा माहेश्वरा बहिः।।२१।।

वीरशैवास्तु षड्भेदाः स्थलधर्मविभेदतः।
भक्तादिव्यवहारेण प्रोच्यते शास्त्रपारगैः।।२२।।

शास्त्रन्तु वीरशैवानां षड्विधं स्थलभेदतः।
धर्मभेद – समायोगादधिकारिविभेदतः।।२३।।

आदौ भक्तस्थलं प्रोक्तं ततो माहेश्वरस्थलम्।
प्रसादिस्थलमन्यत्तु प्राणलिङ्गिस्थलं ततः।।
शरणस्थलमाख्यातं षष्ठमैक्यस्थलं मतम्।।२४।।

भक्तस्थलं प्रवक्ष्यामि प्रथमं कलशोद्भव!।
तदवान्तरभेदांश्च समाहितमनाः शृणु।।२५।।

शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते।
तस्यानुष्ठेय - धर्माणामुक्तिर्भक्तस्थलं मतम्।।२६।।

अवान्तरस्थलान्यत्र प्राहुः पञ्चदशोत्तमाः।
पिण्डता पिण्डविज्ञानं संसारगुणहेयता।।२७।।

दीक्षा लिङ्गधृतिश्चैव विभूतेरपि धारणम्।
रुद्राक्षधारणं पश्चात् पञ्चाक्षरजपस्तथा।।२८।।

भक्तमार्गक्रिया चैव गुरुर्लिङ्गस्य चार्चनम्।
जङ्गमस्य तथा ह्येषां प्रसादस्वीकृतिस्तथा।।२९।।

अत्र दानत्रयं प्रोक्तं सोपाधिनिरुपाधिकम्।
सहजं चेति निर्दिष्टं समस्तागमपारगैः।।
एतानि शिवभक्तस्य कर्तव्यानि प्रयत्नतः।।३०।।

बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे।
शुद्धान्तःकरणो देही पिण्डशब्देन गीयते।।३१।।

शिवशक्तिसमुत्पन्न-प्रपञ्चेऽस्मिन् विकल्प्यते।
पुण्याधिकः क्षीणपापः शुद्धात्मा पिण्डनामकः।।३२।।

एक एव शिवः साक्षाच्चिदानन्दमयो विभुः।।३३।।

निर्विकल्पो निराकारो निर्गुणो निष्प्रपञ्चकः।
अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः।।३४।।

देवतिर्यङ्मनुष्यादिजातिभेदे व्यवस्थितः।
मायी महेश्वरस्तेषां प्रेरको हृदि संस्थितः।।३५।।

चन्द्रकान्ते यथातोयं सूर्यकान्ते यथानलः।
बीजे यथाङ्कुरः सिद्धस्तथात्मनि शिवः स्थितः।।३६।।

आत्मत्वमीश्वरत्वं च ब्रह्मण्येकत्र कल्पितम्।
बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम्।।३७।।

गुणत्रयविभागेन परत्तत्त्वे चिदात्मनि।
भोक्तृत्वं चैव भोज्यत्वं प्रेरकत्वं च कल्पितम्।।३८।।

गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।
तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा।।३९।।

किञ्चित्सत्त्वरजोरूपं भोक्तृसंज्ञकमुच्यते।
अत्यन्ततामसोपाधिर्भोज्यमित्यभिधीयते ।।
परतत्त्वमयोपाधिर्ब्रह्म – चैतन्यमीश्वरः।।४०।।

भोक्ता भोज्यं प्रेरयिता वस्तुत्रयमिदं स्मृतम्।
अखण्डे ब्रह्मचैतन्ये कल्पितं गुणभेदतः।।४१।।

अत्र प्रेरयिता शम्भुः शुद्धोपाधिर्महेश्वरः।
समिश्रोपाधयः सर्वे भोक्तारः पशवः स्मृताः।।४२।।

भोज्यमव्यक्तमित्युक्तं शुद्धतामसरूपकम्।
सर्वज्ञः प्रेरकः शम्भुः किञ्चिज्ज्ञो जीव उच्यते।।
अत्यन्तगूढचैतन्यं जडमव्यक्तमुच्यते।।४३।।

उपाधिः पुनराख्यातः शुद्धाशुद्धविभेदतः।
शुद्धोपाधिः परा माया स्वाश्रया मोहकारिणी।।४४।।

अशुद्धोपाधिरप्येवमविद्याश्रयमोहिनी ।
अविद्याशक्तिभेदेन जीवा बहुविधाः स्मृताः।।४५।।

मायाशक्तिवशादीशो नानामूर्तिधरः प्रभुः।
सर्वज्ञः सर्वकर्ता च नित्यमुक्तो महेश्वरः।।४६।।

किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान्।
अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः।।४७।।

परिभ्रमन्ति संसारे निजकर्मानुसारतः।
देवतिर्यङ्मनुष्यादि - नानायोनिविभेदतः।।४८।।

चक्रनेमिक्रमेणैव भ्रमन्ति हि शरीरिणः।
जात्यायुर्भोगवैषम्यकारणं कर्म केवलम्।।४९।।

एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः।
एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे।।५०।।

देहिनां प्रेरकः शम्भुर्हितमार्गोपदेशकः।
पुनरावृत्तिरहितमोक्षमार्गोपदेशकः ।।५१।।

स्वकर्मपरिपाकेन प्रक्षीणमलवासनः।
शिवप्रसादाज्जीवोऽयं जायते शुद्धमानसः।।५२।।

शुद्धान्तःकरणे जीवे शुद्धकर्मविपाकतः।
जायते शिवकारुण्यात् प्रस्फुटा भक्तिरैश्वरी।।५३।।

जन्तुरन्त्यशरीरोऽसौ पिण्डशब्दाभिधेयकः।।५४।।

शरीरात्मविवेकेन पिण्डज्ञानी स उच्यते।
शरीरमेव चार्वाकैरात्मेति परिकीर्त्यते।।५५।।

इन्द्रियाणां तथात्मत्वमपरैः परिभाष्यते।
बुद्धितत्त्वगतैर्बौद्धैर्बुद्धिरात्मेति गीयते।।५६।।

नेन्द्रियाणां न देहस्य न बुद्धेरात्मता भवेत्।
अहं प्रत्ययवेद्यत्वादनुभूतस्मृतेरपि।।५७।।

शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तः सनातनः।
आत्मस्थितिविवेकी यः पिण्डज्ञानी स कथ्यते।।५८।।

नश्वराणि शरीराणि नानारूपाणि कर्मणा।
आश्रितो नित्य एवासाविति जन्तोर्विवेकिता।।५९।।

शरीरात् पृथगात्मानमात्मभ्यः पृथगीश्वरम्।
प्रेरकं यो विजानाति पिण्डज्ञानीति कथ्यते।।६०।।

निरस्तहृत्कलङ्कस्य नित्यानित्यविवेकिनः।
संसारहेयताबुद्धिर्जायते वासनाबलात्।।६१।।

ऐहिके क्षणिके सौख्ये पुत्रदारादिसम्भवे।
क्षयित्वादियुते स्वर्गे कस्य वाञ्छा विवेकिनः?।।६२।।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
जन्तुर्मरणजन्मभ्यां परिभ्रमति चक्रवत्।।६३।।

मत्स्यकूर्मवराहाङ्गैर्नृसिंहमनुजादिभिः ।
जातेन निधनं प्राप्तं विष्णुनापि महात्मना।।६४।।

भूत्वा कर्मवशाज्जन्तुर्ब्राह्मणादिषु जातिषु।
तापत्रयमहावह्नि - सन्तापाद्दह्यते भृशम्।।६५।।

कर्ममूलेन दुःखेन पीड्यमानस्य देहिनः।
आध्यात्मिकादिना नित्यं कुत्र विश्रान्तिरिष्यते?।।६६।।

आध्यात्मिकं तु प्रथमं द्वितीयं चाधिभौतिकम्।
आधिदैविकमन्यच्च दुःखत्रयमिदं स्मृतम्।।६७।।

आध्यात्मिकं द्विधा प्रोक्तं बाह्याभ्यन्तरभेदतः।
वातपित्तादिजं दुःखं बाह्यमाध्यात्मिकं मतम्।।६८।।

रागद्वेषादिसम्पन्नमान्तरं परिकीर्त्यते।
आधिभौतिकमेतद्धि दुःखं राजादिभूतजम्।।६९।।

आधिदैविकमाख्यातं ग्रहयक्षादिसम्भवम्।
दुःखैरेतैरुपेतस्य कर्मबद्धस्य देहिनः।।७०।।

तडित्सु वीचिमालासु प्रदीपस्य प्रभासु च।
सम्पत्सु कर्ममूलासु कस्य वा स्थिरता-मतिः?।।७१।।

मलकोशे शरीरेऽस्मिन् महादुःखविवर्धने।
तडिदङ्कुरसंकाशे को वा रुच्येत पण्डितः?।।७२।।

नित्यानन्दचिदाकारमात्मतत्त्वं विहाय कः?।
विवेकी रमते देहे नश्वरे दुःखभाजने।।७३।।

विवेकी शुद्धहृदयो निश्चितात्मसुखोदयः।
दुःखहेतौ शरीरेऽस्मिन् कलत्रे च सुतेषु च।।७४।।

सुहृत्सु बन्धुवर्गेषु धनेषु कुलपद्धतौ।
अनित्यबुद्ध्या सर्वत्र वैराग्यं परमश्नुते।।७५।।

विवेकिनो विरक्तस्य विषयेष्वात्मरागिणः।
संसार-दुःखविच्छेदहेतौ बुद्धिः प्रवर्तते।।७६।।

नित्यानित्यविवेकिनः सुकृतिनः शुद्धाशयस्यात्मनो

ब्रह्मोपेन्द्रमहेन्द्र-मुख्यविभवेष्वस्थायितां पश्यतः।
नित्यानन्दपदे निराकृतजगत्संसारदुःखोदये
साम्बे चन्द्रशिरोमणौ समुदयेद्भक्तिर्भवध्वंसिनी।।७७।।

## ।।षष्ठः परिच्छेदः।।

ततो विवेकसम्पन्नो विरागी शुद्धमानसः।
जिज्ञासुः सर्वसंसारदोषध्वंसकरं शिवम्।।१।।

उपैति लोकविख्यातं लोभमोहविवर्जितम्।
आत्मतत्त्वविचारज्ञं विमुक्तविषयभ्रमम्।।२।।

शिवसिद्धान्ततत्त्वज्ञं छिन्नसन्देहविभ्रमम्।
सर्वतन्त्रप्रयोगज्ञं धार्मिकं सत्यवादिनम्।।३।।

कुलक्रमागताचारं कुमार्गाचारवर्जितम्।
शिवध्यानपरं शान्तं शिवतत्त्वविवेकिनम्।।४।।

भस्मोद्धूलननिष्णातं भस्मतत्त्वविवेकिनम्।
त्रिपुण्ड्रधारणोत्कण्ठं धृतरुद्राक्षमालिकम्।।५।।

लिङ्गधारणसंयुक्तं लिङ्गपूजापरायणम्।
लिङ्गाङ्गयोगतत्त्वज्ञं निरूढाद्वैतवासनम्।।६।।

लिङ्गाङ्गस्थलभेदज्ञं श्रीगुरुं शिववादिनम्।
सेवेत परमाचार्यं शिष्यो भक्तिभयान्वितः।।७।।

षण्मासान् वत्सरं वापि यावदेष प्रसीदति।
प्रसन्नं परमाचार्यं भक्त्या मुक्तिप्रदर्शकम्।।
प्रार्थदेदग्रतः शिष्यः प्राञ्जलिर्विनयान्वितः।।८।।

भो कल्याण महाभाग शिवज्ञानमहोदधे।
आचार्यवर्य सम्प्राप्तं रक्ष मां भवरोगिणम्।।९।।

इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः।
शक्तिपातं समालोक्य दीक्षया योजयेदमुम्।।१०।।

दीयते च शिवज्ञानं क्षीयते पाशबन्धनम्।
यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः।।११।।

सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः।
वेधारूपा क्रियारूपा मन्त्ररूपा च तापस।।१२।।

गुरोरालोकमात्रेण हस्तमस्तकयोगतः।
यः शिवत्वसमावेशो वेधा दीक्षेति सा मता।।१३।।

मान्त्री दीक्षेति सा प्रोक्ता मन्त्रमात्रोपदेशिनी।
कुण्डमण्डलिकोपेता क्रिया दीक्षा क्रियात्तरा।।१४।।

शुभमासे शुभतिथौ शुभकाले शुभेऽहनि।
विभूतिं शिवभक्तेभ्यो दत्वा ताम्बूलपूर्वकम्।।
यथाविधि यथायोगं शिष्यमानीय देशिकः।।१५।।

स्नातं शुक्लाम्बरधरं दन्तधावनपूर्वकम्।
मण्डले स्थापयेच्छिष्यं प्राङ्मुखं तमुदङ्मुखः।।१६।।

शिवस्य नामकीर्तिं च चिन्तामपि च कारयेत्।
विभूतिपट्टं दत्त्वाग्रे यथास्थानं यथाविधि।।१७।।

पञ्चब्रह्ममयैस्तत्र स्थापितैः कलशोदकैः।
आचार्यः सममृत्विग्भिस्त्रिः शिष्यमभिषेचयेत्।।१८।।

अभिषिच्य गुरुः शिष्यमासीनं पुरतः शुचिम्।
ततः पञ्चाक्षरीं शैवीं संसारभयतारिणीम्।।१९।।

तस्य दक्षिणकर्णे तु निगूढमपि कीर्तयेत्।
छन्दोरूपमृषिं चास्य देवतान्यासपद्धतिम्।।२०।।

स्फाटिकं शैलजं वापि चन्द्रकान्तमयं तु वा।
बाणं वा सूर्यकान्तं वा लिङ्गमेकं समाहरेत्।।२१।।

सर्वलक्षणसम्पन्ने तस्मिंल्लिङ्गे विशोधिते।
पीठस्थितेऽभिषिक्ते च गन्धपुष्पादिपूजिते।।२२।।

मन्त्रपूते कलां शैवीं योजयेद्विधिना गुरुः।
शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत्।।२३।।

तल्लिङ्गं तस्य तु प्राणे स्थापयेदेकभावतः।
एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत्।।२४।।

प्राणवद् धारणीयं तत्प्राणलिङ्गमिदं तव।
कदाचित् कुत्रचिद्वापि न वियोजय देहतः।।२५।।

यदि प्रमादात् पतिते लिङ्गे देहान्महीतले।
प्राणान् विमुञ्च सहसा प्राप्तये मोक्ष सम्पदः।।२६।।

इति सम्बोधितः शिष्यो गुरुणा शास्त्रवेदिना।
धारयेच्छाङ्करे लिङ्गं शरीरे प्राणयोगतः।।२७।।

लिङ्गस्य धारणं पुण्यं सर्वपापप्रणाशनम्।
आदृतं मुनिभिः सर्वैरागमार्थविशारदैः।।२८।।

लिङ्गधारणमाख्यातं द्विधा सर्वार्थसाधकम्।
बाह्यमाभ्यन्तरं चेति मुनिभिर्मोक्षकांक्षिभिः।।२९।।

चिद्रूपं परमं लिङ्गं शाङ्करं सर्वकारणम्।
यत्तस्य धारणं चित्ते तदान्तरमुदाहृतम्।।३०।।

चिद्रूपं हि परं तत्त्वं शिवाख्यं विश्वकारणम्।
निरस्तविश्वकालुष्यं निष्कलं निर्विकल्पकम्।।३१।।

सत्तानन्दपरिस्फूर्ति – समुल्लासकलामयम्।
अप्रमेयमनिर्देश्यं मुमुक्षुभिरुपासितम्।।३२।।

परं ब्रह्म महालिङ्गं प्रपञ्चातीतमव्ययम्।
तदेव सर्वभूतानामन्तस्त्रिस्थानगोचरम्।।३३।।

मूलाधारे च हृदये भ्रूमध्ये सर्वदेहिनाम्।
ज्योतिर्लिङ्गं यदा भाति यद्ब्रह्मेत्याहुरागमाः।।३४।।

अपरिच्छिन्नमव्यक्तं लिङ्गं ब्रह्म सनातनम्।
उपासनार्थमन्तःस्थं परिच्छिन्नं स्वमायया।।३५।।

लयं गच्छति यत्रैव जगदेतच्चराचरम्।
पुनः पुनः समुत्पत्तिं तल्लिङ्गं ब्रह्म शाश्वतम्।।३६।।

तस्माल्लिङ्गमिति ख्यातं सत्तानन्दचिदात्मकम्।
बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मशब्दाभिधेयकम्।।३७।।

आधारे हृदये वापि भ्रूमध्ये वा निरन्तरम्।
ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणम्।।३८।।

आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्।
भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत्।।३९।।

निरुपाधिकमाख्यातं लिङ्गस्यान्तरधारणम्।
विशिष्टं कोटिगुणितं बाह्यलिङ्गस्य धारणात्।।४०।।

ये धारयन्ति हृदये लिङ्गं चिद्रूपमैश्वरम्।
न तेषां पुनरावृत्तिर्घोर - संसारमण्डले।।४१।।

अन्तर्लिङ्गानुसन्धानमात्मविद्यापरिश्रमः ।
गुरूपासनशक्तिश्च कारणं मोक्षसम्पदाम्।।४२।।

वैराग्यज्ञानयुक्तानां योगिनां स्थिरचेतसाम्।
अन्तर्लिङ्गानुसन्धाने रुचिर्बाह्ये न जायते।।४३।।

ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्याश्च लोकपाः।

मुनयः सिद्धगन्धर्वा दानवा मानवास्तथा।।४४।।

सर्वे च ज्ञानयोगेन सर्वकारणकारणम्।
पश्यन्ति हृदये लिङ्गं परमानन्दलक्षणम्।।४५।।

तस्मात् सर्वप्रयत्नेन शाङ्करं लिङ्गमुत्तमम्।
अन्तर्विभावयेद्विद्वानशेषक्लेशमुक्तये ।।४६।।

अन्तर्धारयितुं लिङ्गमशक्तः शक्त एव वा।
बाह्यं संधारयेल्लिङ्गं तद्रूपमिति निश्चयात्।।४७।।

लिङ्गं तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परात्परम्।
इष्टलिङ्गमिदं स्थूलं यद्बाह्ये धार्यते तनौ।।४८।।

प्राणलिङ्गमिदं सूक्ष्मं यदन्तर्भावनामयम्।
परात्परं च यत्प्रोक्तं तृप्तिलिङ्गं तदुच्यते।।४९।।

भावनातीतमव्यक्तं परब्रह्म शिवाभिधम्।।५०।।

इष्टलिङ्गमिदं साक्षादनिष्ट – परिहारतः।
धारयेदवधानेन शरीरे सर्वदा बुधः।।५१।।

मूर्ध्नि वा कण्ठदेशे वा कक्षे वक्षःस्थलेऽपि वा।
कुक्षौ हस्ततले वापि धारयेल्लिङ्गमैश्वरम्।।५२।।

नाभेरधस्ताल्लिङ्गस्य धारणं पापकारणम्।
जटाग्रे त्रिकभागे च मलस्थाने न धारयेत्।।५३।।

लिङ्गधारी सदा शुद्धो निजलिङ्गं मनोरमम्।
अर्चयेद् गन्धपुष्पाद्यैः करपीठे समाहितः।।५४।।

बाह्यपीठार्चनादेतत् करपीठार्चनं वरम्।
सर्वेषां वीरशैवानां मुमुक्षूणां निरन्तरम्।।५५।।

ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः।
धारयन्ति सदा लिङ्गमुत्तमाङ्गे विशेषतः।।५६।।

लक्ष्म्यादिशक्तयः सर्वाः शिवभक्तिविभाविताः।
धारयन्त्यलिकाग्रेषु शिवलिङ्गमहर्निशम्।।५७।।

वेदशास्त्रपुराणेषु कामिकाद्यागमेषु च।
लिङ्गधारणमाख्यातं वीरशैवस्य निश्चयात्।।५८।।

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते।
तस्मात्पवित्रं तल्लिङ्गं धार्यं शैवमनामयम्।।५९।।

ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणः पतिरीश्वरः।

पवित्रं तद्धि विख्यातं तत्सम्पर्कात्तनुः शुचिः।।६०।।

अतप्ततनुरज्ञो वै आमः संस्कारवर्जितः।
दीक्षया रहितः साक्षान्नाप्नुयाल्लिङ्गमुत्तममम्।।६१।।

अघोरा पापकाशीति या ते रुद्र शिवा तनूः।
यजुषा गीयते यस्मात् तस्माच्छैवोऽघवर्जितः।।७२।।

यो लिङ्गधारी नियतान्तरात्मा
नित्यं शिवाराधनबद्धचित्तः।
स धारयेत् सर्वमलापहत्यै
भस्मामलं चारु यथाप्रयोगम्।।६३।।

## ।।सप्तमः परिच्छेदः।।

### ( ६ ) भस्मधारणस्थलम्

भस्मधारणसंयुक्तः पवित्रो नियताशयः।
शिवाभिधानं यत्प्रोक्तं भासनात् भसितं तथा।।१।।

महाभस्मेति सञ्चिन्त्य महादेवं प्रभामयम्।
वर्तन्ते ये महाभागाः मुख्यास्ते भस्मधारिणः।।२।।

शिवाग्न्यादिसमुत्पन्नं मन्त्रन्यासादियोगतः।
तदुपाधिकमित्याहुर्भस्म तन्त्रविशारदाः।।३।।

विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः।
एतानि पञ्च नामानि हेतुभिः पञ्चभिर्भृशम्।।४।।

विभूतिर्भूतिहेतुत्वाद् भसितं तत्त्वभासनात्।
पापानां भर्त्सनाद्भस्म क्षरणात् क्षारमापदाम्।।५।।

रक्षणात् सर्वभूतेभ्यो रक्षेति परिगीयते।
नन्दा भद्रा च सुरभिः सुशीला सुमनास्तथा।।६।।

पञ्च गावो विभोर्जाताः सद्योजातादिवक्त्रतः।
कपिला कृष्णा च धवला धूम्रा रक्ता तथैव च।।७।।

नन्दादीनां गवां वर्णाः क्रमेण परिकीर्तिताः।
सद्योजाताद्विभूतिश्च वामाद्भसितमेव च।।८।।

अघोरात् भस्म सञ्जातं तत्पुरुषात् क्षारनाम च।
रक्षा चेशानवक्त्राच्च नन्दादिद्वारतोऽभवत्।।९।।

धारयेन्नित्यकार्येषु विभूतिं च प्रयत्नतः।
नैमित्तिकेषु भसितं क्षारं काम्येषु सर्वदा।।१०।।

प्रायश्चित्तेषु सर्वेषु भस्मनाम यथाविधि।
रक्षा च मोक्षकार्येषु प्रयोक्तव्या सदा बुधैः।।११।।

नन्दादीनां तु ये वर्णाः कपिलाद्याः प्रकीर्तिताः।
त एव वर्णा विख्याता भूत्यादीनां यथाक्रमम्।।१२।।

भस्मोत्पादनमुद्दिष्टं चतुर्धा तन्त्रवेदिभिः।
कल्पं चैवानुकल्पं च तूपकल्पमकल्पकम्।।१३।।

एषामादिममुत्कृष्टमन्यत् सर्वमभावतः।
यथाशास्त्रोक्तविधिना गृहीत्वा गोमयं नवम्।।१४।।

सद्येन वामदेवेन कुर्यात्पिण्डमनुत्तमम्।
शोषयेत्पुरुषेणैव दहेद् घोराच्छिवाग्निना।।१५।।

कल्पं तद्भस्म विज्ञेयमनुकल्पमथोच्यते।
वनेषु गोमयं यच्च शुष्कं चूर्णीकृतं तथा।।१६।।

दग्धं चैवानुकल्पाख्यमापणादिगतं तु यत्।
वस्त्रेणोत्तारितं भस्म गोमूत्राबद्धपिण्डितम्।।१७।।

दग्धं प्रागुक्तविधिना भवेद्भस्मोपकल्पकम्।
अन्यैरापादितं भस्माप्यकल्पमिति निश्चितम्।।१८।।

एष्वेकतममादाय पात्रेषु कलशादिषु।
त्रिसन्ध्यमाचरेत् स्नानं यथासम्भवमेव वा।।१९।।

स्नानकाले करौ पादौ प्रक्षाल्य विमलाम्भसा।
वामहस्ततले भस्म क्षिप्त्वाच्छाद्यान्यपाणिना।।२०।।

अष्टकृत्वोऽथ मूलेन मौनी भस्माभिमन्त्र्य च।
शिर ईशानमन्त्रेण पुरुषेण मुखं तथा।।२१।।

हृत्प्रदेशमघोरेण वामदेवेन गुह्यकम्।
पादौ सद्येन सर्वाङ्गं प्रणवेनैव सेचयेत्।।२२।।

भस्मना विहितं स्नानमिदमाग्नेयमुत्तमम्।
स्नानेषु वारुणाद्येषु मुख्यमेतन्मलापहम्।।२३।।

भस्मस्नानवतां पुंसां यथायोगं दिने दिने।
वारुणाद्यैरलं स्नानैर्बाह्यदोषापहारिभिः।।२४।।

आग्नेयं भस्मना स्नानं यतिभिस्तु विधीयते।
आर्द्रस्नानात्परं भस्म आर्द्रे जन्तुवधो ध्रुवम्।।२५।।

आर्द्रं तु प्रकृतिं विन्द्यात् प्रकृतिं बन्धनं विदुः।
प्रकृतेस्तु प्रहाणार्थं भस्मना स्नानमिष्यते।।२६।।

ब्रह्माद्या विबुधाः सर्वे मुनयो नारदादयः।
योगिनः सनकाद्याश्च बाणाद्या दानवा अपि।।२७।।

भस्मस्नानयुताः सर्वे शिवभक्तिपरायणाः।
निर्मुक्तदोषकलिला नित्यशुद्धा भवन्ति हि।।२८।।

नमः शिवायेति भस्म कृत्वा सप्ताभिमन्त्रितम्।
उद्धूलयेत् तेन देहं त्रिपुण्ड्रं चापि धारयेत्।।२९।।

सर्वाङ्गोद्धूलनं चापि न समानं त्रिपुण्ड्रकैः।

तस्मात् त्रिपुण्ड्रमेवैकं लिखेदुद्धूलनं विना।।३०।।

त्रिपुण्ड्रं धारयेन्नित्यं भस्मना सलिलेन च।
स्थानेषु पञ्चदशसु शरीरे साधकोत्तमः।।३१।।

उत्तमाङ्गे ललाटे च श्रवणद्वितये तथा।
गले भुजद्वये चैव हृदि नाभौ च पृष्ठके।।३२।।

बाहुयुग्मे ककुद्देशे मणिबन्धद्वये तथा।
त्रिपुण्ड्रं भस्मना धार्यं मूलमन्त्रेण साधकैः।।३३।।

वामहस्ततले भस्म क्षिप्त्वाच्छाद्यान्यपाणिना।
अग्निरित्यादिमन्त्रेण स्पृशन् वाराभिमन्त्र्य च।।३४।।

त्रिपुण्ड्रमुक्तस्थानेषु दध्यात् सजलभस्मना।
शिवं शिवंकरं शान्तं स प्राप्नोति न संशयः।।३५।।

मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु।
षडङ्गुलायतं मानमपि वालिकमानकम्।।३६।।

नेत्रयुग्मप्रमाणेन फाले दध्यात् त्रिपुण्ड्रकम्।
मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः ।।३७।।

धारयेद्यस्त्रिपुण्ड्राङ्कं स रुद्रो नात्र संशयः।
ऋजुश्वेतमनुव्याप्तं स्निग्धं श्रोत्रप्रमाणकम्।।३८।।

एवं सल्लक्षणोपेतं त्रिपुण्ड्रं सर्वसिद्धिदम्।
प्रातःकाले च मध्याह्ने सायाह्ने च त्रिपुण्ड्रकम्।।३९।।

कदाचिद् भस्मना कुर्यात् स रुद्रो नात्र संशयः।
एवंविधं विभूत्या च कुरुते यस्त्रिपुण्ड्रकम्।।
स रौद्रधर्मसंयुक्तस्त्रयीमय इति श्रुतिः।।४०।।

ब्रह्मा विष्णुश्च रुद्रश्च देवाः शक्रपुरोगमाः।
त्रिपुण्ड्रं धारयन्त्येव भस्मना परिकल्पितम्।।४१।।

वसिष्ठाद्या महाभागा मुनयः श्रुतिकोविदाः।
धारयन्ति सदाकालं त्रिपुण्ड्रं भस्मना कृतम्।।४२।।

शैवागमेषु वेदेषु पुराणेष्वखिलेषु च।
स्मृतीतिहासकल्पेषु विहितं भस्मपुण्ड्रकम्।।
धारणीयं समस्तानां शैवानां च विशेषतः।।४३।।

नास्तिको भिन्नमर्यादो दुराचारपरायणः।
भस्मत्रिपुण्ड्रधारी चेन्मुच्यते सर्वकिल्बिषैः।।४४।।

भस्मना विहितस्नानस्त्रिपुण्ड्राङ्कितमस्तकः।
शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत्।।४५।।

भस्मना विहितस्नानस्त्रिपुण्ड्राङ्कितमस्तकः।
शिवार्चनपरो नित्यं रुद्राक्षमपि धारयेत्।।४५।।

रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः।
दुष्टचित्ता दुराचारा दुष्प्रजा अपि मानवाः।।४६।।

पुरा त्रिपुरसंहारे त्रिनेत्रो जगतां पतिः।
उदपश्यत् पुरां योगमुन्मीलितविलोचनः।।४७।।

निपेतुस्तस्य नेत्रेभ्यो बहवो जलबिन्दवः।
तेभ्यो जाता हि रुद्राक्षा रुद्राक्षा इति कीर्तिताः।।४८।।

रुद्रनेत्रसमुत्पन्ना रुद्राक्षा लोकपावनाः।
अष्टत्रिंशत्प्रभेदेन भवन्त्युत्पत्तिभेदतः।।४९।।

नेत्रात् सूर्यात्मनः शम्भोः कपिला द्वादशोदिताः।
श्वेताः षोडश सञ्जाताः सोमरूपाद्विलोचनात्।।५०।।

कृष्णा दशविधा जाता वह्निरूपाद्विलोचनात्।
एवमुत्पत्तिभेदेन रुद्राक्षा बहुधा स्मृताः।।५१।।

अच्छिद्रं कनकप्रख्यमनन्यधृतमुत्तमम्।
रुद्राक्षं दारयेत्प्राज्ञः शिवपूजापरायणः।।५२।।

यथास्थानं यथावक्त्रं यथायोगं यथाविधि।
रुद्राक्षधारणं वक्ष्ये रुद्रसायुज्य-सिद्धये।।५३।।

शिखायामेकमेकास्यं रुद्राक्षं धारयेद्बुधः।
द्वित्रिद्वादशवक्त्राणि शिरसि त्रीणि धारयेत्।।५४।।

षट्त्रिंशद्धारयेन्मूर्ध्नि नित्यमेकादशाननान्।
दशसप्तपञ्चवक्त्रान् षट् षट् कर्णद्वये वहेत्।।५५।।

षडष्टवदनान् कण्ठे द्वात्रिंशद्धारयेत् सदा।
पञ्चाशद्धारयेद्विद्वान् चतुर्वक्त्राणि वक्षसि।।५६।।

त्रयोदशमुखान् बाह्वोर्धरेत् षोडश षोडश।
प्रत्येकं द्वादश वहेन्नवास्यान् मणिबन्धयोः।।५७।।

चतुर्दशमुखं यज्ञसूत्रमष्टोत्तरं शतम्।
धारयेत् सार्वकालं तु रुद्राक्षं शिवपूजकः।।५८।।

एवं रुद्राक्षधारी यः सर्वकाले तु वर्तते।

तस्य पापकथा नास्ति मूढस्यापि न संशयः।।५९।।

ब्रह्महा मद्यपायी च स्वर्णहृद् गुरुतल्पगः।
मातृहा पितृहा चैव भ्रूणहा कृतघातकः।।
रुद्राक्षधारणादेव मुच्यते सर्वपातकैः।।६०।।

दर्शनात् स्पर्शनाच्चैव स्मरणादपि पूजनात्।
रुद्राक्षधारणाल्लोके मुच्यन्ते पातकैः जनाः।।६१।।

ब्राह्मणो वान्त्यजो वापि मूर्खो वा पण्डितोऽपि वा।
रुद्राक्षधारणादेव मुच्यन्ते सर्वपातकैः।।६२।।

गवां कोटिप्रदानस्य यत्फलं भुवि लभ्यते।
तत्फलं लभते मर्त्यो नित्यं रुद्राक्षधारणात्।।६३।।

मृत्युकाले च रुद्राक्षं निष्पीड्य सह वारिणा।
यः पिबेच्चिन्तयन् रुद्रं रुद्रलोकं स गच्छति।।६४।।

भस्मोद्धूलितसर्वाङ्गा धृतरुद्राक्षमालिकाः।
ये भवन्ति महात्मानस्ते रुद्रा नात्र संशयः।।६५।।

नित्यानि काम्यानि निमित्तजानि
कर्माणि सर्वाणि सदापि कुर्वन्।
यो भस्मरुद्राक्षधरो यदि स्याद्
द्विजो न तस्यास्ति फलोपपत्तिः।।६६।।

सर्वेषु वर्णाश्रमसङ्गतेषु
नित्यं सदाचारपरायणेषु।
श्रुतिस्मृतिभ्यामिह चोद्यमानो
विभूति - रुद्राक्षधरः समानः।।६७।।

## ।।अष्टमः परिच्छेदः।।

धृतश्रीभूतिरुद्राक्षः प्रयतो लिङ्गधारकः।
जपेत् पञ्चाक्षरीविद्यां शिवतत्त्वप्रबोधिनीम्।।१।।

शिवतत्त्वात् परं नास्ति यथा तत्त्वान्तरं महत्।
तथा पञ्चाक्षरीमन्त्रान्नास्ति मन्त्रान्तरं महत्।।२।।

ज्ञाते पञ्चाक्षरीमन्त्रे किं वा मन्त्रान्तरैः फलम्?।
ज्ञाते शिवे जगन्मूले किं फलं देवतान्तरैः?।।३।।

सप्तकोटिषु मन्त्रेषु मन्त्रः पञ्चाक्षरो महान्।
ब्रह्मविष्ण्वादिदेवेषु यथा शम्भुर्महत्तरः।।४।।

अशेषजगतां हेतुः परमात्मा महेश्वरः।
तस्य वाचकमन्त्रोऽयं सर्वमन्त्रैककारणम्।।५।।

तस्याभिधानमन्त्रोऽयभिधेयश्च स स्मृतः।
अभिधानाभिधेयत्वान्मन्त्रात् सिद्धः परः शिवः।।६।।

नमः शब्दं वदेत्पूर्वं शिवायेति ततः परम्।
मन्त्रः पञ्चाक्षरो ह्येष सर्वश्रुतिशिरोगतः।।७।।

आदितः परिशुद्धत्वान्मलत्रयवियोगतः।
शिव इत्युच्यते शम्भुश्चिदानन्दघनः प्रभुः।।८।।

आस्पदत्वादशेषाणां मङ्गलानां विशेषतः।
शिवशब्दाभिधेयो हि देवदेवस्त्रियम्बकः।।९।।

शिव इत्यक्षरद्वन्द्वं परब्रह्मप्रकाशकम्।
मुख्यवृत्त्या तदन्येषां शब्दानां गुणवृत्तिता।।१०।।

तस्मान्मुख्यतरं नाम शिव इत्यक्षरद्वयम्।
सच्चिदानन्दरूपस्य शम्भोरमिततेजसः।।११।।

एतन्नामावलम्बेन मन्त्रः पञ्चाक्षरः स्मृतः।
यस्मादतः सदा जप्यो मोक्षकाङ्क्षिभिरादरात्।।१२।।

यथानादिर्महादेवः सिद्धः संसारमोचकः।
तथा पञ्चाक्षरीमन्त्रः संसारक्षयकारकः।।१३।।

पञ्चभूतानि सर्वाणि पञ्च तन्मात्रकानि च।
ज्ञानेन्द्रियाणि पञ्चापि पञ्च कर्मेन्द्रियाणि च।।
पञ्च ब्रह्माणि पञ्चापि कृत्यानि सह कारणैः।
बोध्यानि पञ्चभिर्वर्णैः पञ्चाक्षरमहामनोः।।१५।।

पञ्चधा पञ्चधा यानि प्रसिद्धानि विशेषतः।
तानि सर्वाणि वस्तूनि पञ्चाक्षरमयानि हि।।१६।।

ओंकारपूर्वो मन्त्रोऽयं पञ्चाक्षरमयः परः।
शैवागमेषु वेदेषु षडक्षर इति स्मृतः।।१७।।

मन्त्रस्यास्यादिभूतेन प्रणवेन महामनोः।
प्रबोध्यते महादेवः केवलश्चित्सुखात्मकः।।१८।।

प्रणवेनैकवर्णेन परब्रह्म प्रकाश्यते।
अद्वितीयं परानन्दं शिवाख्यं निष्प्रपञ्चकम्।।१९।।

परमात्ममनुर्ज्ञेयः सोऽहंरूपः सनातनः।
जायते सहयोर्लोपादोमित्येकाक्षरो मनुः।।२०।।

प्रणवेनैव मन्त्रेण बोध्यते निष्कलः शिवः।
पञ्चाक्षरेण मन्त्रेण पञ्चब्रह्मतनुस्तथा।।२१।।

निष्कलः संविदाकारः सकलो विश्वमूर्तिकः।
उभयात्मा शिवो मन्त्रे षडक्षरमये स्थितः।।२२।

मूलं विद्या शिवः शैवं सूत्रं पञ्चाक्षरस्तथा।
एतानि नामधेयानि कीर्तितानि महामनोः।।२३।।

पञ्चाक्षरीमिमां विद्यां प्रणवेन षडक्षरीम्।
जपेत् समाहितो भूत्वा शिवपूजापरायणः।।२४।।

प्राणायामत्रयं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा।
चिन्तयन् हृदयाम्भोजे देवदेवं त्रियम्बकम्।।२५।।

सर्वालङ्कारसंयुक्तं साम्बं चन्द्रार्धशेखरम्।
जपेदेतां महाविद्यां शिवरूपामनन्यधीः।।२७।।

जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसः।
श्रूयते यस्तु पार्श्वस्थैर्यथा वर्णसमन्वयः।।२७।।

वाचिकः स तु विज्ञेयः सर्वपापप्रभञ्जनः।
ईषत् स्पृष्ट्वाधरपुटं यो मन्दमभिधीयते।।२८।।

पार्श्वस्थैरश्रुतः सोऽयमुपांशुः परिकीर्तितः।
अस्पृष्ट्वाधरमस्पन्दि जिह्वाग्रं योऽन्तरात्मना।।
भाव्यते वर्णरूपेण स मानस इति स्मृतः।।२९।।

यावन्तः कर्मयज्ञाद्याः व्रतदानतपांसि च।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्।।३०।।

माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्तितम्।
तस्माच्छतगुणोपांशुः सहस्त्रो मानसः स्मृतः।।३१।।

वाचिकात् तदुपांशोश्च जपादस्य महामनोः।
मानसो हि जपः श्रेष्ठो घोरसंसारनाशकः।।३२।।

एतेष्वेतेन विधिना यथाभावं यथाक्रमम्।
जपेत् पञ्चाक्षरीमेतां विद्यां पाशविमुक्तये।।३३।।

अनेन मूलमन्त्रेण शिवलिङ्गं प्रपूजयेत्।
नित्यं नियमसम्पन्नः प्रयतात्मा शिवात्मकः।।३४।।

भक्त्या पञ्चाक्षरैणैव यः शिवं सकृदर्चयेत्।
सोऽपि गच्छेच्छिवस्थानं मन्त्रस्यास्यैव गौरवात्।।३५।।

अब्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः।
तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः।।३६।।

तस्मात् तपांसि यज्ञाश्च व्रतानि नियमास्तथा।
पञ्चाक्षरार्चनस्यैव कोट्यंशेनापि नो समाः।।३७।।

अशुद्धो वा विशुद्धो वा सकृत्पञ्चाक्षरेण यः।
पूजयेत् पतितो वापि मुच्यते नात्र संशयः।।३८।।

सकृदुच्चारमात्रेण पञ्चाक्षरमहामनोः।
सर्वेषामपि जन्तूनां सर्वपापक्षयो भवेत्।।३९।।

अन्येऽपि बहवो मन्त्रा विद्यन्ते सकलागमे।
भूयो भूयः समभ्यासात् पुरुषार्थप्रदायिनः।।४०।।

एष मन्त्रो महाशक्तिरीश्वरप्रतिपादकः।
सकृदुच्चारणादेव सर्व - सिद्धिप्रदायकः।।४१।।

पञ्चाक्षरीं समुच्चार्य पुष्पं लिङ्गे विनिक्षिपेत्।
यस्तस्य वाजपेयानां सहस्त्रफलमिष्यते।।४२।।

अग्निहोत्रं त्रयो वेदा यज्ञाश्च बहुदक्षिणाः।
पञ्चाक्षरजपस्यैते कोट्यंशेनापि नो समाः।।४३।।

पुरा सानन्दयोगीन्द्रः शिवज्ञानपरायणः।
पञ्चाक्षरं समुच्चार्य नारकानुदतारयत्।।४४।।

सिद्धया पञ्चाक्षरस्यास्य शतानन्दः पुरा मुनिः।
नरकं स्वर्गमकरोत् सङ्गिरस्यापि पापिनः।।४५।।

उपमन्युः पुरा योगी मन्त्रेणानेन सिद्धिमान्।

लब्धवान् परमेशानाच्छैवशास्त्रप्रवक्तृताम्।।४६।।

वसिष्ठवामदेवाद्या मुनयो मुक्तकिल्बिषाः।
मन्त्रेणानेन संसिद्धा महातेजस्विनोऽभवन्।।४७।।

ब्रह्मादीनां च देवानां जगत्सृष्ट्यादिकर्मणि।
मन्त्रस्यास्यैव माहात्म्यात् सामर्थ्यमुपजायते।।४८।।

किमिह बहुभिरुक्तैर्मन्त्रमेवं महात्मा
प्रणवसहितमादौ यस्तु पञ्चाक्षराख्यम्।
जपति परमभक्त्या पूजयन् देवदेवं
स गतदुरितबन्धो मोक्षलक्ष्मीं प्रयाति।।४९।।

## ।।नवमः परिच्छेदः।।

भूतिरुद्राक्ष-संयुक्तो लिङ्गधारी सदा शुचिः।
पञ्चाक्षरजपोद्योगी शिवभक्त इति स्मृतः।।१।।

श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।२।।

एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना।
दुर्लभा पापिनां लोके सुलभा पुण्यकर्मणाम्।।३।।

अधमे चोत्तमे वापि यत्र कुत्रचिदूर्जिता।
वर्तते शाङ्करी भक्तिः स भक्त इति गीयते।।४।।

भक्तिः स्थिरीकृता यस्मिन् म्लेच्छे वा द्विजसत्तमे।
शम्भोः प्रियः स विप्रश्च न प्रियो भक्तिवर्जितः।।५।।

सा भक्तिर्द्विविधा ज्ञेया बाह्याभ्यन्तरभेदतः।
बाह्या स्थूलान्तरा सूक्ष्मा वीरमाहेश्वरादृता।।६।।

सिंहासने शुद्धदेशे सुरम्ये रत्नचित्रिते।
शिवलिङ्गस्य पूजा या सा बाह्या भक्तिरुच्यते।।७।।

लिङ्गे प्राणं समाधाय प्राणे लिङ्गं तु शाम्भवम्।
स्वस्थं मनस्तथा कृत्वा न किञ्चिच्चिन्तयेद्यदि।।८।।

साभ्यन्तरा भक्तिरिति प्रोच्यते शिवयोगिभिः।
सा यस्मिन् वर्तते तस्य जीवनं भ्रष्टबीजवत्।।९।।

बहुनात्र किमुक्तेन गुह्याद् गुह्यतरा परा।
शिवभक्तिर्न सन्देहस्तया युक्तो विमुच्यते।।१०।।

प्रसादादेव सा भक्तिः प्रसादो भक्तिसम्भवः।
यथैवाङ्कुरतो बीजं बीजतो वा यथाङ्कुरम्।।११।।

प्रसादपूर्विका येयं भक्तिर्मुक्तिविधायिनी।
नैव सा शक्यते प्राप्तुं नरैरेकेन जन्मना।।१२।।

अनेकजन्मशुद्धानां श्रौतस्मार्तानुवर्तिनाम्।
विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः।।१३।।

प्रसन्ने सति मुक्तोऽभून्मुक्तः शिवसमो भवेत्।
अल्पभक्त्यापि यो मर्त्यस्तस्य जन्मत्रयात्परम्।।१४।।

न योनियन्त्रपीडा वै भवेन्नैवात्र संशयः।
साङ्गा न्यूना च या सेवा सा भक्तिरिति कथ्यते।।१५।।

सा पुनर्भिद्यते त्रेधा मनोवाक्कायसाधनैः।
शिवरूपादिचिन्ता या सा सेवा मानसी स्मृता।
जपादि वाचिकी सेवा कर्मपूजा च कायिकी।।१६।।

बाह्यमाभ्यन्तरं चैव बाह्याभ्यन्तरमेव वा।
मनोवाक्कायभेदैश्च त्रिधा तद्भजनं विदुः।।१७।।

मनो महेशध्यानाढ्यं नान्यध्यानरतं मनः।
शिवनामरता वाणी वाङ्मता चैव नेतरा।।१८।।

लिङ्गैः शिवस्य चोद्दिष्टैस्त्रिपुण्ड्रादिभिरङ्कितः।
शिवोपचारनिरतः कायः कायो न चेतरः।।१९।।

अन्यात्मविदितं बाह्यं शम्भोरभ्यर्चनादिकम्।
तदेव तु स्वसंवेद्यमाभ्यन्तरमुदाहृतम्।
मनो महेशप्रवणं बाह्याभ्यन्तरमुच्यते।।२०।।

पञ्चधा कथ्यते सद्भिस्तदेव भजनं पुनः।
तपः कर्म जपो ध्यानं ज्ञानं चेत्यनुपूर्वकम्।।२१।।

शिवार्थे देहसंशोषस्तपः कृच्छ्रादि नो मतम्।
शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते।।२२।।

जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव वा।
रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम्।।२३।।

ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम्।
शिवागमार्थ-विज्ञानं ज्ञानं नान्यार्थवेदनम्।।
इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः।।२४।।

अनेन पञ्चयज्ञेन यः पूजयति शङ्करम्।
भक्त्या परमया युक्तः स वै भक्त इतीरितः।।२५।।

पूजनाच्छिवभक्तस्य पुण्या गतिरवाप्यते।
अवमानान्महाघोरो नरको नात्र संशयः।।२६।।

शिवभक्तो महातेजाः शिवभक्तिपराङ्मुखान्।
न स्पृशेन्नैव वीक्षेत न तैः सह वसेत् क्वचित्।।२७।।

यदा दीक्षाप्रवेशः स्याल्लिङ्गधारणपूर्वकः।
तदाप्रभृति भक्तोऽसौ पूजयेत् स्वागमस्थितान्।।२८।।

स्वमार्गाचारनिरताः सजातीया द्विजास्तु ये।
तेषां गृहेषु भुञ्जीत नेतरेषां कदाचन।।२९।।

स्वमार्गाचारविमुखैर्भविभिः प्राकृतात्मभिः।

प्रेषितं सकलं द्रव्यमात्मलीनमपि त्यजेत्।।३०।।

नार्चयेदन्यदेवांस्तु न स्मरेन्न च कीर्तयेत्।
न तन्नैवेद्यमश्नीयाच्छिवभक्तो दृढव्रतः।।३१।।

यद्गृहेष्वन्यदेवोऽस्ति तद्गृहाणि परित्यजेत्।
नान्यदेवार्चकान् मर्त्यान् पूजाकाले निरीक्षयेत्।।३२।।

सदा शिवैकनिष्ठानां वीरशैवाध्ववर्तिनाम्।
न हि स्थावरलिङ्गानां निर्माल्याद्युपयुज्यते।।३३।।

यत्र स्थावरलिङ्गानामपायः परिवर्तते।
अथवा शिवभक्तानां शिवलाञ्छनधारिणाम्।।३४।।

तत्र प्राणान् विहायापि परिहारं समाचरेत्।
शिवार्थं मुक्तजीवश्चेच्छिवसायुज्यमाप्नुयात्।।३५।।

शिवनिन्दाकरं दृष्ट्वा घातयेदथवा शपेत्।
स्थानं वा तत्परित्यज्य गच्छेद् यद्यक्षमो भवेत्।।३६।।

यत्र चाचारनिन्दास्ति कदाचित्तत्र न व्रजेत्।
यद्गृहे शिवनिन्दास्ति तद्गृहाणि परित्यजेत्।।३७।।

यः सर्वभूताधिपतिं विश्वेशानं विनिन्दति।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि।।३८।।

शिवपूजापरो भूत्वा पर्वकर्म विसर्जयेत्।
अथवा पूर्वकर्म स्यात् सा पूजा निष्फला भवेत्।।३९।।

उत्तमां गतिमाश्रित्य नीचां वृत्तिं समाश्रितः।
आरूढ - पतितो ज्ञेयः सर्वकर्मबहिष्कृतः।।४०।।

पञ्चाक्षरोपदेशी च नरस्तुतिकरो यदि।
सोऽलिङ्गी सदुचारी कुकविः स तु विश्रुतः।।४१।।

चर्मपात्रे जलं तैलं न ग्राह्यं भक्ति-तत्परैः।
गृह्यते यदि भक्तेन रौरवं नरकं व्रजेत्।।४२।।

न तस्य सूतकं किञ्चित्प्राणलिङ्गाङ्गसङ्गिनः।
जन्मनोत्थं मृतोत्थं च विद्यते परमार्थतः।।४३।।

लिङ्गार्चनरतायाश्च ऋतौ नार्या न सूतकम्।
तया प्रसूतिकायाश्च सूतकं नैव विद्यते।।४४।।

गृहे यस्मिन् प्रसूता स्त्री सूतकं नात्र विद्यते।
शिवपादाम्बु-संस्पर्शात् सर्वपापं प्रणश्यति।।४५।।

शिवस्थानानि तीर्थानि विशिष्टानि शिवार्चकः।
शिवयात्रोत्सवं नित्यं सेवेत परया मुदा।।४६।।

शिवक्षेत्रोत्सवमहायात्रादर्शनकाङ्क्षिणाम् ।
मार्गेऽन्नदानपानं च कुर्यान्माहेश्वरो जनः।।४७।।

नान्नतोयसमं दानं न चाहिंसापरं तपः।
तस्मान्महेश्वरो नित्यमन्नतोयप्रदो भवेत्।।४८।।

स्वमार्गाचारवर्तिभ्यः स्वजातिभ्यः सदा व्रती।
दद्यात् तेभ्यः समादद्यात् कन्यां कुलसमुद्भवाम्।।४९।।

एवमाचारसंयुक्तो वीरशैवो महाव्रती।
पूजयेत्परया भक्तया गुरुं लिङ्गं च सन्ततम्।।५०

गुरोरभ्यर्चनेनापि साक्षादभ्यर्चितः शिवः।
तयोर्नास्ति भिदा किञ्चिदेकत्वात् तत्त्वरूपतः।।५१।।

यथा देवे जगन्नाथे सर्वानुग्रहकारके।
तथा गुरुवरे कुर्यादुपचारान् दिने दिने।।५२।।

अप्रत्यक्षो महादेवः सर्वेषामात्ममायया।
प्रत्यक्षो गुरुरूपेण वर्तते भक्तिसिद्धये।।५३।।

शिवज्ञानं महाघोरसंसारार्णवतारकम्।
दीयते येन स गुरुः कस्य वन्द्यो न जायते।।५४।।

यत्कटाक्षकलामात्रात् परमानन्दलक्षणम्।
लभ्यते शिवरूपत्वं स गुरुः केन नार्चितः?।।५५।।

हितमेव चरेन्नित्यं शरीरेण धनेन च।
आचार्यस्योपशान्तस्य शिवज्ञानमहानिधेः।।५६।।

गुरोराज्ञां न लङ्घेत सिद्धिकामो महामतिः।
तदाज्ञालङ्घनेनापि शिवाज्ञाच्छेदको भवेत्।।५७।।

यथा गुरौ यथा लिङ्गे भक्तिमान् परिवर्तते।
जङ्गमे च तथा नित्यं भक्तिं कुर्याद्विचक्षणः।।५८।।

एक एव शिवः साक्षात् सर्वानुग्रहकारकः।
गुरुजङ्गमलिङ्गात्मा वर्तते भुक्तिमुक्तिदः।।५९।।

लिङ्गं च द्विविधं प्रोक्तं जङ्गमाजङ्गमात्मना।
अजङ्गमे यथा भक्तिर्जङ्गमे च तथा स्मृता।।६०।।

अजङ्गमं तु यल्लिङ्गं मृच्छिलादिविनिर्मितम्।

तद्वरं जङ्गमं लिङ्गं शिवयोगीति विश्रुतम्।।६१।।

अचरे मन्त्रसंस्कारा लिङ्गे वसति शङ्करः।
सदाकालं वसत्येव चरलिङ्गे महेश्वरः।।६२।।

शिवयोगिनि यद्दत्तं तदक्षयफलं भवेत्।
तस्मात्सर्वप्रयत्नेन तस्मै देयं महात्मने।।६३।।

यत्फलं लभते जन्तुः पूजया शिवयोगिनः।
तदक्षयमिति प्रोक्तं सकलागमपारगैः।।६४।।

नावमन्येत कुत्रापि शिवयोगिनमागतम्।
अवमानाद्भवेत्तस्य दुर्गतिश्च न संशयः।।६५।।

शिवयोगी शिवः साक्षादिति कैङ्कर्यभक्तितः।
पूजयेदादरेणैव यथा लिङ्गं यथागुरुम्।।६६।।

पादोदकं यथा भक्त्या स्वीकरोति महेशितुः।
तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि।।६७।।

सर्वमङ्गलमाङ्गल्यं   सर्वपावनपावनम्।
सर्वसिद्धिकरं पुंसां शम्भोः पादाम्बुधारणम्।।६८।।

शिरसा धारयेद्यस्तु पत्रं पुष्पं शिवार्पितम्।
प्रतिक्षणं भवेत्तस्य पौण्डरीकक्रियाफलम्।।६९।।

भुञ्जीयाद् रुद्रभुक्तान्नं रुद्रपीतं जलं पिबेत्।
रुद्राघ्रातं सदा जिघ्रेदिति जाबालिकी श्रुतिः।।७०।।

अर्पयित्वा निजे लिङ्गे पत्रं पुष्पं फलं जलम्।
अन्नाद्यं सर्वभोज्यं च स्वीकुर्याद् भक्तिमान्नरः।।७१।।

गुरुत्वात् सर्वभूतानां शम्भोरमिततेजसः।
तस्मै निवेदितं सर्वं स्वीकार्यं तत्परायणैः।।७२।।

ये लिङ्गधारिणो लोके ये शिवैकपरायणाः।
तेषां तु शिवनिर्माल्यमुचितं नान्यजन्तुषु।।७३।।

अन्नजाते तु भक्तेन भुज्यमाने शिवार्पिते।
सिक्थे सिक्थेऽश्वमेधस्य यत्फलं तदवाप्यते।।७४।।

निर्माल्यं निर्मलं शुद्धं शिवेन स्वीकृतं यतः।
निर्मलैस्तत्परैर्धार्यं नान्यैः प्राकृतजन्तुभिः।।७५।।

शिव-भक्तिविहीनानां जन्तूनां पापकर्मणाम्।
विशुद्धे शिवनिर्माल्ये नाधिकारोऽस्ति कुत्रचित्।।७६।।

शिवलिङ्गप्रसादस्य स्वीकाराद्यत्फलं भवेत्।
तथा प्रसादस्वीकाराद् गुरुजङ्गमयोरपि।।७७।।

तस्माद् गुरुं महादेवं शिवयोगिनमेव च।
पूजयेत् तत्प्रसादान्नं भुञ्जीयात् प्रतिवासरम्।।७८।।

शिवलिङ्गे शिवाचार्ये शिवयोगिनि भक्तिमान्।
दानं कुर्याद्यथाशक्ति तत्प्रसादयुतः सदा।।७९।।

दानं च त्रिविधं प्रोक्तं सोपाधिनिरुपाधिकम्।
सहजं चेति सर्वेषां सर्व - तन्त्रविशारदैः।।८०।।

फलाभिसन्धि-संयुक्तं दानं यद्विहितं भवेत्।
तत् सोपाधिकमाख्यातं मुमुक्षुभिरनाहतम्।।८१।।

फलाभिसन्धिनिर्मुक्तमीश्वरार्पितकाङ्क्षितम् ।
निरुपाधिकमाख्यातं दानं दानविशारदैः।।८२।।

आदातृदातृदेयानां शिवभावं विचिन्तयन्।
आत्मनोऽकर्तृभावं च यद्दत्तं सहजं भवेत्।।८३।।

सहजं दानमुत्कृष्टं सर्वदानोत्तमोत्तमम्।
शिवज्ञानप्रदं पुंसां जन्मरोगनिवर्तकम्।।८४।।

शिवाय शिवभक्ताय दीयते यदि किञ्चन।
भक्त्या तदपि विख्यातं सहजं दानमुत्तमम्।।८५।।

दानात् स्वर्णसहस्रस्य सत्पात्रे यत्फलं भवेत्।
एकपुष्पप्रदानेन शिवे तत्फलमिष्यते।।८६।।

शिव एव परं पात्रं सर्वविद्यानिधिर्गुरुः।
तस्मै दत्तं तु यत्किञ्चित् तदनन्तफलं भवेत्।।८७।।

शिवयोगी शिवः साक्षाच्छिवज्ञान-महोदधिः।
यत्किञ्चिद्दीयते तस्मै तद्दानं पारमार्थिकम्।।८८।।

शिवयोगी महत्पात्रं सर्वेषां दानकर्मणि।
तस्मान्नास्ति परं किञ्चित् पात्रं शास्त्रविचारतः।।८९।।

भिक्षामात्रप्रदानेन शान्ताय शिवयोगिने।
यत्फलं लभ्यते नैतद् यज्ञकोटिशतैरपि।।९०।।

शिवयोगिनि सन्तृप्ते तृप्तो भवति शङ्करः।
तत्तृप्त्या तन्मयं विश्वं तृप्तिमेति चराचरम्।।९१।।

तस्मात्सर्वप्रयत्नेन येन केनापि कर्मणा।
तृप्तिं कुर्यात् सदाकालमन्नाद्यैः शिवयोगिनः।।९२।।

निरुपाधिकचिद्रूपपरानन्दात्म - वस्तुनि।
समाप्तं सकलं यस्य स दानी शङ्करः स्वयम्।।९३।।

उक्ताखिलाचार-परायणोऽसौ
सदा वितन्वन् सहजं तु दानम्।
ब्रह्मादिसम्पत्सु विरक्तचित्तो
भक्तो हि माहेश्वरतामुपैति।।९४।।

## ।।दशमः परिच्छेदः।।

भक्तस्थलं समाख्यातं भवता गणनायक।
केन वा धर्मभेदेन भक्तो माहेश्वरो भवेत्?।।१।।

केवले सहजे दाने निष्णातः शिवतत्परः।
ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः।।२।।

भक्तेर्यदा समुत्कर्षो भवेद् वैराग्यगौरवात्।
तदा माहेश्वरः प्रोक्तो भक्तः स्थिरविवेकवान्।।३।।

माहेश्वरस्थलं वक्ष्ये यथोक्तं शम्भुना पुरा।
माहेश्वरप्रशंसादौ लिङ्गनिष्ठा ततः परम्।।४।।

पूर्वाश्रयनिरासश्च तथाद्वैत – निराकृतिः।
आह्वानवर्जनं पश्चादष्टमूर्तिनिराकृतिः।।५।।

सर्वगत्वनिरासश्च शिवत्वं विश्वभक्तयोः।
एवं नवविधं प्रोक्तं माहेश्वरमहास्थलम्।।६।।

आदितः क्रमशो वक्ष्ये स्थलभेदस्य लक्षणम्।
समाहितेन मनसा श्रूयतां भवता मुने!।।७।।

विश्वस्मादधिको रुद्रो विश्वानुग्रहकारकः।
इति यस्य स्थिरा बुद्धिः स वै माहेश्वरः स्मृतः।।८।।

ब्रह्माद्यैर्मलिनप्रायैर्निर्मले परमेश्वरे।
साम्योक्तिं यो न सहते स वै माहेश्वराभिधः।।९।।

ईश्वरः सर्वभूतानां ब्रह्मादीनां महानिति।
बुद्धियोगात्तदासक्तो भक्तो माहेश्वरः स्मृतः।।१०।।

ब्रह्मादिदेवताजालं मोहितं मायया सदा।
अशक्तं मुक्तिदाने तु क्षयातिशय-संयुतम्।।११।।

अनादिमुक्तो भगवानेक एव महेश्वरः।
मुक्तिदश्चेति यो वेद स वै माहेश्वरः स्मृतः।।१२।।

क्षयातिशयसंयुक्ता ब्रह्मविष्ण्वादि-सम्पदः।
तृणवन्मन्यते युक्त्या वीरमाहेश्वरः सदा।।१३।।

शब्दस्पर्शादिसम्पन्ने सुखलेशे तु निःस्पृहः।
शिवानन्दे समुत्कण्ठो वीरमाहेश्वरो भवेत्।।१४।।

परस्त्रीसङ्गनिर्मुक्तः परद्रव्यपराङ्मुखः।
शिवार्थकार्यसम्पन्नः शिवागमपरायणः।।१५।।

शिवस्तुतिरसास्वादमोदमानमनाः शुचिः।
शिवोत्कर्षप्रमाणानां सम्पादनसमुद्यतः।।१६।।

निर्ममो निरहंकारो निरस्तक्लेशपञ्जरः।
अस्पृष्टमदसम्बन्धो मात्सर्यावेशवर्जितः।।१७।।

निरस्तमदनोन्मेषो निर्धूतक्रोधविप्लवः।
सदा सन्तुष्टहृदयः सर्वप्राणिहिते रतः।।१८।।

निवारणसमुद्योगी शिवकार्यविरोधिनाम्।
सहचारी सदाकालं शिवोत्कर्षाभिधायिभिः।।१९।।

अस्य माहेश्वरस्योक्तं लिङ्गनिष्ठामहास्थलम्।
प्राणात्ययेऽपि सम्पन्ने यदत्याज्यं विधीयते।।२१।।

अपगच्छतु सर्वस्वं शिरश्छेदनमस्तु वा।
माहेश्वरो न मुच्येत लिङ्गपूजामहाव्रतम्।।२२।।

लिङ्गपूजामकृत्वा तु ये न भुञ्जन्ति मानवाः।
तेषां महात्मनां हस्ते मोक्षलक्ष्मी पस्थिता।।२३।।

किमन्यैर्धर्मकलिलैः कीकषार्थप्रदायिभिः।
साक्षान्मोक्षप्रदः शम्भोर्धर्मो लिङ्गार्चनात्मकः।।२५।।

अर्पितेनान्नपानेन लिङ्गे नियमपूजिते।
ये देहवृत्तिं कुर्वन्ति महामाहेश्वरा हि ते।।२५।।

चिन्मये शाङ्करे लिङ्गे स्थिरं येषां मनः सदा।
विमुक्तेतरसवार्थं ते शिवा नात्र संशयः।।२६।।

लिङ्गे यस्य मनोलीनं लिङ्गस्तुतिपरा च वाक्।
लिङ्गार्चनपरौ हस्तौ स रुद्रो नात्र संशयः।।२७।।

लिङ्गनिष्ठस्य किं तस्य कर्मणा स्वर्गहेतुना?।
नित्यानन्दशिवप्राप्तिर्यस्य शास्त्रेषु निश्चिता।।२८।।

लिङ्गनिष्ठापरं शान्तं भूतिरुद्राक्षसंयुतम्।
प्रशंसन्ति सदाकालं ब्रह्माद्या देवता मुदा।।२९।।

लिङ्गैकनिष्ठहृदयः सदा माहेश्वरो जनः।
पूर्वाश्रयगतान् धर्मांस्त्यजेत् स्वाचाररोधकान्।।३०।।

स्वजातिकुलजान् धर्मान् लिङ्गनिष्ठाविरोधिनः।
त्यजन् माहेश्वरो ज्ञेयः पूर्वाश्रयनिरासकः।।३१।।

शिवसंस्कारयोगेन विशुद्धानां महात्मनाम्।

किं पूर्वकालिकैर्धर्मैः प्राकृतानां हि ते मताः।।३२।।

शिवसंस्कार – योगेन शिवधर्मानुषङ्गिणाम्।
प्राकृतानां न धर्मेषु प्रवृत्तिरुपपद्यते।।३३।।

विशुद्धाः प्राकृताश्चेति द्विविधा मानुषाः स्मृताः।
शिवसंस्कारिणः शुद्धाः प्राकृता इतरे मताः।।३४।।

वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता।
एका शिवेन निर्दिष्टा ब्रह्मणा कथितापरा।।३५।।

शिवोक्तधर्मनिष्ठा तु शिवाश्रमनिषेविणाम्।
शिवसंस्कारहीनानां धर्मः पैतामहः स्मृतः।।३६।।

पूज्यपूजकयोर्लिङ्गजीवयोर्भेदवर्जने ।
पूजाकर्माद्यसम्पत्तेर्लिङ्गनिष्ठा विरोधतः।।३७।।

सर्वाद्वैतविचारस्य ज्ञानाभावे व्यवस्थितेः।
भवेन्माहेश्वरः कर्मी सर्वाद्वैतनिरासकः।।३८।।

प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मानमेव च।
भेदात् तं पूजयेन्नित्यं न चाद्वैतपरो भवेत्।।३९।।

पतिः साक्षान्महादेवः पशुरेव तदाश्रयः।
अनयोः स्वामिभृत्यत्वमभेदे कथमिष्यते?।।४०।।

साक्षात्कृतं परं तत्त्वं यदा भवति बोधतः।
तदाद्वैत-समापत्तिर्ज्ञानहीनस्य न क्वचित्।।४१।।

भेदस्य कर्महेतुत्वाद् व्यवहारः प्रवर्तते।
लिङ्गपूजादिकर्मस्थो न चाद्वैतं समाचरेत्।।४२।।

पूजादिव्यवहारः स्याद्भेदाश्रयतया सदा।
लिङ्गपूजापरस्तस्मान्नाद्वैते निरतो भवेत्।।४३।।

लिङ्गार्चनपरः शुद्धः सर्वाद्वैतनिरासकः।
स्वेष्टलिङ्गे शिवाकारे न तमावाहयेच्छिवम्।।४४।।

यदा शिवकलायुक्तं लिङ्गं दद्यान्महागुरुः।
तदारभ्य शिवस्तत्र तिष्ठत्याह्वानमत्र किम्?।।४५।।

ससंस्कारेषु लिङ्गेषु सदा सन्निहितः शिवः।
तत्राह्वानं न कर्तव्यं प्रतिपत्तिविरोधकम्।।४६।।

नाह्वानं न विसर्गं च स्वेष्टलिङ्गे तु कारयेत्।
लिङ्गनिष्ठापरो नित्यमिति शास्त्रस्य निश्चयः।।४७।।

यथात्मशिवयोरैक्यं न मतं कर्मसङ्गिनः।
तथा शिवात्पृथिव्यादेरद्वैतमपि नेष्यते।।४८।।

पृथिव्याद्यष्टमूर्तित्वमीश्वरस्य प्रकीर्तितम्।
तदधिष्ठातृभावेन न साक्षादेकभावतः।।४९।।

पृथिव्यादिकमिदं सर्वं कार्यं कर्ता महेश्वरः।
नैतत्साक्षान्महेशोऽयं कुलालो मृत्तिका यथा।।५०।।

पृथिव्याद्यात्मपर्यन्तप्रपञ्चो ह्यष्टधा स्थितः।
तनुरीशस्य चात्मायं सर्वतत्त्वनियामकः।।५१।।

शरीरभूतादेतस्मात् प्रपञ्चात्परमेष्ठिनः।
आत्मभूतस्य देवस्य नाभेदो न पृथक्स्थितिः।।५२।।

अचेतनत्वात्पृथ्व्यादेरज्ञत्वादात्मनस्तथा ।
सर्वज्ञस्य महेशस्य नैकरूपत्वमिष्यते।।५३।।

इति यश्चिन्तयेन्नित्यं पृथ्व्यादेरष्टमूर्तितः।
विलक्षणं महादेवं सोऽष्टमूर्ति - निरासकः।।५४।।

सर्वगत्वे महेशस्य सर्वत्राराधनं भवेत्।
न लिङ्गमात्रे तन्निष्ठो न शिवं सर्वगं स्मरेत्।।५५।।

सर्वगोऽपि स्थितः शम्भुः स्वाधारे हि विशेषतः।
तस्मादन्यत्र विमुखः स्वेष्टलिङ्गे यजेच्छिवम्।।५६।।

शिवः सर्वगतश्चापि स्वाधारे व्यज्यते भृशम्।
शमीगर्भे यथा वह्निर्विशेषेण विभाव्यते।।५७।।

सर्वगत्वं महेशस्य सर्वशास्त्रविनिश्चितम्।
तथाप्याश्रयलिङ्गादौ पूजार्थमधिका स्थितिः।।५८।।

नित्यं भासि तदीयस्त्वं या ते रुद्र शिवा तनूः।
अघोरा पापकाशीति श्रुतिराह सनातनी।।५९।।

तस्मात् सर्वप्रयत्नेन सर्वस्थानपराङ्मुखः।
स्वेष्टलिङ्गे महादेवं पूजयेत् पूजकोत्तमः।।६०।।

शिवस्य सर्वगत्वेऽपि सर्वत्र रतिवर्जितः।
स्वेष्टलिङ्गे यजन् देवं सर्वगत्वनिरासकः।।६१।।

पूजाविधौ नियम्यत्वाल्लिङ्गमात्रे स्थितं शिवम्।
पूजयन्नपि देवस्य सर्वगत्वं विभावयेत्।।६२।।

यस्मादेतत्समुत्पन्नं महादेवाच्चराचरम्।

तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः।।६३।।

शिवतत्त्वात् समुत्पन्नं जगदस्मान्न भिद्यते।
फेनोर्मिबुद्बुदाकारो यथा सिन्धोर्न भिद्यते।।६४।।

यथा तन्तुभिरुत्पन्नः पटस्तन्तुमयः स्मृतः।
तथा शिवात्समुत्पन्नं शिव एव चराचरम्।।६५।।

आत्मशक्तिविकासेन शिवो विश्वात्मना स्थितः।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात्।।६६।।

तस्माच्छिवमयं सर्वं जगदेतच्चराचरम्।
तदभिन्नतया भाति सर्पत्वमिव रज्जुतः।।६७।।

रज्जौ सर्पत्ववद्भाति शुक्तौ च रजतत्ववत्।
चीरत्ववदपि स्थाणौ मरीच्यां च जलत्ववत्।।६८।।

गन्धर्वपुरवद्व्योम्नि सच्चिदानन्दलक्षणे।
निरस्तभेद-सद्भावे शिवे विश्वं विराजते।।६९।।

पत्रशाखादिरूपेण यथा तिष्ठति पादपः।
तथा भूम्यादिरूपेण शिव एको विराजते।।७०।।

समस्तजगदात्मापि शङ्करः परमेश्वरः।
भक्तानां हृदयाम्भोजे विशेषेण विराजते।।७१।।

कैलासे मन्दरे चैव हिमाद्रौ कनकाचले।
हृदयेषु च भक्तानां विशेषेण व्यवस्थितः।।७२।।

सर्वात्मापि परिच्छिन्नो यथा देहेषु वर्तते।
तथा स्वकीय-भक्तेषु शङ्करो भासते सदा।।७३।।

नित्यं भाति त्वदीयेषु या ते रुद्र शिवा तनूः।
अघोरा पापकाशीति श्रुतिराह सनातनी।।७४।।

विशुद्धेषु विरक्तेषु विवेकिषु महात्मसु।
शिवस्तिष्ठति सर्वात्मा शिवलाञ्छन-धारिषु।।७५।।

नित्यं सन्तोषयुक्तानां ज्ञाननिर्धूतकर्मणाम्।
माहेश्वराणामन्तःस्थो विभाति परमेश्वरः।।७६।।

अन्यत्र शम्भोरतिमात्र-शून्यो
निजेष्टलिङ्गे नियतान्तरात्मा।
शिवात्मकं विश्वमिदं विबुध्यन्
माहेश्वरोऽसौ भवति प्रसादी।।७७।।

# ।।एकादशः परिच्छेदः।।

उक्तो माहेश्वरः साक्षाल्लिङ्गनिष्ठादिधर्मवान्।
कथमेष प्रसादीति कथ्यते गणनायक!।।१।।

लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः।
मनः - प्रसादयोगेन प्रसादीत्येष कथ्यते।।२।।

प्रसादिस्थलमित्येतदस्य माहात्म्यबोधकम्।
अन्तरस्थलभेदेन सप्तधा परिकीर्तितम्।।३।।

प्रसादिस्थलमादौ तु गुरुमाहात्म्यकं ततः।
ततो लिङ्गप्रशंसा च ततो जङ्गमगौरवम्।।४।।

ततो भक्तस्य माहात्म्यं ततः शरणकीर्तनम्।
शिवप्रसादमाहात्म्यमिति सप्तप्रकारकम्।।५।।

क्रमाल्लक्षणमेतेषां कथयामि महामुने।
नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते।।
शिवस्य लिङ्गरूपस्य प्रसादादेव सिद्ध्यति।।६।।

शिवप्रसादो यद्द्रव्यं शिवाय विनिवेदितम्।
निर्माल्यं तत्तु शैवानां मनोनैर्मल्यकारणम्।।७।।

मनः प्रसादसिद्ध्यर्थं निर्मलज्ञानकारणम्।
शिवप्रसादं स्वीकुर्वन् प्रसादीत्येष कथ्यते।।८।।

अन्नशुद्ध्या हि सर्वेषां तत्त्वशुद्धिरुदाहृता।
विशुद्धमन्नजातं हि यच्छिवाय समर्पितम्।।९।।

तदेव सर्वकालं तु भुञ्जानो लिङ्गतत्परः।
मनःप्रसादमतुलं लभते ज्ञानकारणम्।।१०।।

आत्मभोगाय नियतं यद्यद्द्रव्यं समाहितम्।
तत्तत् समर्प्य देवाय भुञ्जीतात्मविशुद्धये।।११।।

नित्यसिद्धेन देवेन भिषजा जन्मरोगिणाम्।
यद्यत् प्रसादितं भुक्त्वा तत्तज्जन्मरसायनम्।।१२।

आरोग्यकारणं पुंसामन्तःकरणशुद्धिदम्।
तापत्रयमहारोग - समुद्धरणभेषजम्।।१३।।

विद्यावैशद्यकरणं विनिपातविघातनम्।
द्वारं ज्ञानावतारस्य मोहोच्छेदस्य कारणम्।।१४।।

वैराग्यसम्पदो मूलं महानन्दप्रवर्धनम्।

दुर्लभं पापचित्तानां सुलभं शुद्धकर्मणाम्।।१५।।

आदृतं ब्रह्मविष्ण्वाद्यैर्वसिष्ठाद्यैश्च तापसैः।
शिवस्वीकृतमन्नाद्यं स्वीकार्यं सिद्धिकांक्षिभिः।।१६।।

पत्रं पुष्पं फलं तोयं यच्छिवाय निवेदितम्।
तत्तत् - स्वीकारयोगेन सर्वपापक्षयो भवेत्।।१७।।

यथा शिवप्रसादान्नं स्वीकार्यं लिङ्गतत्परैः।
तथा गुरोः प्रसादान्नं तथैव शिवयोगिनाम्।।१८।।

गुरुरेवात्र सर्वेषां कारणं सिद्धिकर्मणाम्।
गुरुरूपो महादेवो यतः साक्षादुपस्थितः।।१९।।

निष्कलो हि महादेवो नित्यज्ञानमहोदधिः।
सकलो गुरुरूपेण सर्वानुग्राहको भवेत्।।२०।।

यः शिवः स गुरुर्ज्ञेयो यो गुरुः स शिवः स्मृतः।
न तयोरन्तरं कुर्यात् ज्ञानावाप्तौ महामतिः।।२१।।

हस्तपादादिसाम्येन नेतरैः सदृशं वदेत्।
आचार्यं ज्ञानदं शुद्धं शिवरूपतया स्थितम्।।२२।।

आचार्यस्यावमानेन श्रेयःप्राप्तिर्विहन्यते।
तस्मान्निःश्रेयसप्राप्त्यै पूजयेत् तं समाहितः।।२३।।

गुरुभक्तिविहीनस्य शिवभक्तिर्न जायते।
ततः शिवे यथा भक्तिस्तथा भक्तिर्गुरावपि।।२४।।

गुरुमाहात्म्ययोगेन  निजज्ञानातिरेकतः।
लिङ्गस्यापि च माहात्म्यं सर्वोत्कृष्टं विभाव्यते।।२५।।

शिवस्य बोधलिङ्गं यद् गुरुबोधितचेतसा।
तदेव लिङ्गं विज्ञेयं शाङ्करं सर्वकारणम्।।२६।।

परं पवित्रममलं लिङ्गं ब्रह्म सनातनम्।
शिवाभिधानं चिन्मात्रं सदानन्दं निरङ्कुशम्।।२७।।

कारणं सर्वलोकानां वेदानामपि कारणम्।
पूरणं सर्वतत्त्वस्य तारणं जन्मवारिधेः।।२८।।

ज्योतिर्मयमनिर्देश्यं योगिनामात्मनि स्थितम्।
कथं विज्ञायते लोके महागुरुदयां विना?।।२९।।

ब्रह्मणा विष्णुना पूर्वं यल्लिङ्गं ज्योतिरात्मकम्।
अपरिच्छेद्यमभवत् केन वा परिचोद्यते?।।३०।।

बहुनात्र किमुक्तेन? लिङ्गं ब्रह्म सनातनम्।
योगिनो यत्र लीयन्ते मुक्तपाशनिबन्धनाः।।३१।।

पीठिका परमा शक्तिर्लिङ्गं साक्षात् परः शिवः।
शिवशक्तिसमायोगं विश्वं लिङ्गं तदुच्यते।।३२।।

ब्रह्मादयः सुराः सर्वे मुनयः शौनकादयः।
शिवलिङ्गार्चनादेव स्वं स्वं पदमवाप्नुयुः।।३३।।

विश्वाधिपत्वमीशस्य लिङ्गमूर्तेः स्वभावजम्।
अनन्यदेवसादृश्यं श्रुतिराह सनातनी।।३४।।

गुरुशिष्यसमारूढलिङ्गमाहात्म्य - सम्पदः।
सर्वं चिद्रूपविज्ञानाज्जङ्गमाधिक्यमुच्यते।।३५।।

जानन्त्यतिशयाद्ये तु शिवं विश्वप्रकाशकम्।
स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः।।३६।।

ये पश्यन्ति जगज्जालं चिद्रूपं शिवयोगतः।
निर्धूतमलसंस्पर्शास्ते स्मृताः शिवयोगिनः।।३७।।

घोरसंसारतिमिरपरिध्वंसन - कारणम्।
येषामस्ति शिवज्ञानं ते मताः शिवयोगिनः।।३८।।

जितकामा जितक्रोधा मोहग्रन्थिविभेदिनः।
समलोष्टाश्मकनकाः साधवः शिवयोगिनः।।३९।।

समाः शत्रौ च मित्रे च साक्षात्कृतशिवात्मकाः।
निःस्पृहा निरहङ्कारा वर्तन्ते शिवयोगिनः।।४०।।

दुर्लभं हि शिवज्ञानं दुर्लभं शिवचिन्तनम्।
येषामेतद्द्वयं चास्ति ते हि साक्षाच्छिवात्मकाः।।४१।।

पादाग्ररेणवो यत्र पतन्ति शिवयोगिनाम्।
तदेव सदनं पुण्यं पावनं गृहमेधिनाम्।।४२।।

सर्वसिद्धिकरं पुंसां दर्शनं शिवयोगिनाम्।
स्पर्शनं पापशमनं पूजनं मुक्ति - साधनम्।।४३।।

महतां शिवतात्पर्य - वेदिनामनुमोदिनाम्।
किं वा फलं न सिद्ध्येत सम्पर्काच्छिवयोगिनाम्?।।४४।।

गुरोर्लिङ्गस्य माहात्म्यकथनाच्छिवयोगिनाम्।
सिद्धं भक्तस्य माहात्म्यं तथाप्येष प्रशस्यते।।४५।।

ये भजन्ति महादेवं परमात्मानमव्ययम्।

कर्मणा मनसा वाचा ते भक्ता इति कीर्तिताः।।४६।।

दुर्लभा हि शिवे भक्तिः संसारमयतारिणी।
सा यत्र वर्तते साक्षात् स भक्तः परिगीयते।।४७।।

किं वेदैः किं ततः शास्त्रैः किं यज्ञैः किं तपोव्रतैः।
नास्ति चेच्छाङ्करी भक्तिर्देहिनां जन्मरोगिणाम्।।४८।।

शिवभक्तिविहीनस्य सुकृतं चापि निष्फलम्।
विपरीतफलं च स्याद् दक्षस्यापि महाध्वरे।।४९।।

अत्यन्तपापकर्मापि शिवभक्त्या विशुद्ध्यति।
चण्डो यथा पुरा भक्त्या पितृहापि शिवोऽभवत्।।५०।।

सुकृतं दुष्कृतं चापि शिवभक्तस्य नास्ति हि।
शिवभक्तिविहीनानां कर्मपाशनिबन्धनम्।।५१।।

शिवाश्रितानां जन्तूनां कर्मणा नास्ति सङ्गमः।
वाजिनां दिननाथस्य कथं तिमिरजं भयम्?।।५२।।

निरोद्धुं न क्षमं कर्म शिवभक्तान् विशृङ्खलान्।
कथं मत्तगजान् रुन्धेच्छृङ्खला बिसतन्तुजा?।।५३।।

ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव वा।
अन्त्यजो वा शिवे भक्तः शिववन्मान्य एव सः।।५४।।

शिवभक्तिसमावेशे क्व जातिपरिकल्पना?।
इन्धनेष्वग्निदग्धेषु को वा भेदः प्रकीर्त्यते?।।५५।।

शुद्धा नियमसंयुक्ताः शिवार्पित-फलागमाः।
अर्चयन्ति शिवं लोके विज्ञेयास्ते गणेश्वराः।।५६।।

गुरुलिङ्गादिमाहात्म्यबोधान्वेषण – सङ्गतः।
सर्वात्मना शिवापत्तिः शरणस्थानमुच्यते।।५७।।

ब्रह्मादिविबुधान् सर्वान् मुक्त्वा प्राकृतवैभवान्।
प्रपद्यते शिवं यत्तु शरणं तदुदाहृतम्।।५८।।

शरण्यः सर्वभूतानां शङ्करः शशिशेखरः।
सर्वात्मना प्रपन्नस्तं शरणागत उच्यते।।५९।।

विमुक्तभोगलालस्यो देवतान्तरनिःस्पृहः।
शिवमभ्यर्थयन् मोक्षं शरणार्थीति गीयते।।६०।।

ये प्रपन्ना महादेवं मनोवाक्कायकर्मभिः।
तेषां तु कर्मजातेन किं वा देवादितर्पणैः?।।६१।।

सर्वेषामपि यज्ञानां क्षयः स्वर्गः फलायते।
अक्षयं फलमाप्नोति प्रपन्नः परमेश्वरम्।।६२।।

प्रयत्नपारिजातस्य भवस्य परमात्मनः।
प्रपत्त्या किं न जायेत पापिनामपि देहिनाम्?।।६३।।

प्रपन्नानां महादेवं परिपक्वान्तरात्मनाम्।
जन्मैव जन्मनान्येषां वृथा जननसङ्गिनाम्।।६४।।

दुर्लभं मानुषं प्राप्य जननं ज्ञानसाधनम्।
ये न जानन्ति देवेशं तेषामात्मा निरर्थकः।।६५।।

तत्कुलं हि सदा शुद्धं सफलं तस्य जीवितम्।
यस्य चित्तं शिवे साक्षाद् विलीनमबहिर्मुखम्।।६६।।

गुरुलिङ्गादिमाहात्म्यविशेषानुभवस्थितिः ।
यस्माच्छिवप्रसादात्स्यात्तदस्य महिमोच्यते।।६७।।

सदा लिङ्गैकनिष्ठानां गुरुपूजानुषङ्गिणाम्।
प्रपन्नानां विशुद्धानां प्रसीदति महेश्वरः।।६८।।

प्रसादोऽपि महेशस्य दुर्लभः परिकीर्त्यते।
घोरसंसारसन्तापनिवृत्तिर्येन जायते।।६९।।

यज्ञास्तपांसि मन्त्राणां जपश्चिन्ता प्रबोधनम्।
प्रसादार्थं महेशस्य कीर्तितानि न संशयः।।७६।।

प्रसादमूला सर्वेषां भक्तिरव्यभिचारिणी।
शिवप्रसादहीनस्य भक्तिश्चापि न सिद्धयति।।७७।।

गर्भस्थो जायमानो वा जातो वा ब्राह्मणोऽथवा।
अन्त्यजो वापि मुच्येत प्रसादे सति शाङ्करे।।७२।।

ब्रह्माद्या विबुधाः सर्वे स्वस्वस्थाननिवासिनः।
नित्यसिद्धा भवन्त्येव प्रसादात् पारमेश्वरात्।।७३।।

प्रसादे शाम्भवे सिद्धे परमानन्दकारणे।
सर्वं शिवमयं विश्वं दृश्यते नात्र संशयः।।७४।।

संसारचक्रनिर्वाहनिमित्तं कर्म केवलम्।
प्रसादेन विना शम्भोर्न कस्यापि निवर्तते।।७५।।

बहुनात्र किमुक्तेन नास्ति नास्ति जगत्त्रये।
समानमधिकं चापि प्रसादस्य महेशितुः।।७६।।

शिवप्रसादे सति योगभाजि

सर्वं शिवैकात्मतया विभाति।
स्वकर्ममुक्तः शिवभावितात्मा
स प्राणलिङ्गीति निगद्यतेऽसौ।।७७।।

# ।।द्वादशः परिच्छेदः।।

भक्तो माहेश्वरश्चेति प्रसादीति विबोधितः।
एक एव कथं चैष प्राणलिङ्गीति कथ्यते?।।१।।

भक्तो माहेश्वरश्चैष प्रसादीति च कीर्तितः।
कर्मप्राधान्ययोगेन ज्ञानयोगोऽस्य कथ्यते।।२।।

लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते।।३।।

प्राणलिङ्गिस्थलं चैतत् पञ्चस्थलसमन्वितम्।
प्राणलिङ्गिस्थलं चादौ प्राणलिङ्गार्चनं ततः।।४।।

शिवयोगसमाधिश्च ततो लिङ्गनिजस्थलम्।
अङ्गलिङ्गिस्थलं चाथ क्रमादेषां भिदोच्यते।।५।।

प्राणापानसमाघातात् कन्दमध्याद्यदुत्थितम्।
प्राणलिङ्गं तदाख्यातं प्राणापाननिरोधिभिः।।६।।

प्राणो यत्र लयं याति भास्करे तुहिनं यथा।
तत्प्राणलिङ्गमुद्दिष्टं तद्धारी स्यात् तदाकृतिः।।७।।

ज्ञानिनां योगयुक्तानामन्तः स्फुरति दीपवत्।
चिदाकारं परब्रह्मलिङ्गमज्ञैर्न भाव्यते।।८।।

अन्तः स्थितं परं लिङ्गं ज्योतीरूपं शिवात्मकम्।
विहाय बाह्यलिङ्गस्था विमूढा इति कीर्तिताः।।९।।

संविल्लिङ्गपरामर्शी वाह्यवस्तु-पराङ्मुखः।
यः सदा वर्तते योगी प्राणलिङ्गी स उच्यते।।१०।।

मायाविकल्पजं विश्वं हेयं सञ्चिन्त्य नित्यशः।
चिदानन्दमये लिङ्गे विलीनः प्राणलिङ्गवान्।।११।।

सत्ता प्राणमयी शक्तिः सद्रूपं प्राणलिङ्गकम्।
तत्सामरस्य-विज्ञानात् प्राणलिङ्गीति कथ्यते।।१२।।

अन्तर्गतं चिदाकारं लिङ्गं शिवमयं परम्।
पूज्यते भावपुष्पैर्यत् प्राणलिङ्गार्चनं हि तत्।।१३।।

अन्तः - पवनसंस्पृष्टे सुसूक्ष्माम्बरशोभिते।
मूर्धन्यचन्द्र विगलत्सुधासेकातिशीतले ।।१४।।

बद्धेन्द्रियनवद्वारे बोधदीपे हृदालये।
पद्मपीठे समासीनं चिल्लिङ्गं शिवविग्रहम्।।

भावयित्वा सदाकालं पूजयेद् भाववस्तुभिः।।१५।।

क्षमाभिषेकसलिलं विवेकी वस्त्रमुच्यते।
सत्यमाभरणं प्रोक्तं वैराग्यं पुष्पमालिका।।१६।।

गन्धः समाधिसम्पत्तिरक्षता निरहङ्कृतिः।
श्रद्धा धूपो महाज्ञानं जगद्भासि प्रदीपिका।।१७।।

भ्रान्तिमूलप्रपञ्चस्य नैवेद्यं तन्निवेदनम्।
मौनं घण्टापरिस्पन्दस् ताम्बूलं विषयार्पणम्।।१८।।

विषयभ्रान्तिराहित्यं तत्प्रदक्षिणकल्पना।
बुद्धेस्तदात्मिका शक्तिर्नमस्कारक्रिया मता।।१९।।

एवं - विधैर्भावशुद्धैरुपचारैरदूषितैः।
प्रत्युन्मुखमना भूत्वा पूजयेल्लिङ्गमान्तरम्।।२०।।

अन्तःक्रियारतस्यास्य प्राणलिङ्गार्चनक्रमैः।
शिवात्मध्यानसम्पत्तिः समाधिरिति कथ्यते।।२१।।

सर्वतत्त्वोपरिगतं सच्चिदानन्दभासुरम्।
स्वप्रकाशमनिर्देश्यमवाङ्मनसगोचरम् ।।२२।।

उमाख्यया महाशक्त्या दीपितं चित्स्वरूपया।
हंसरूपं परात्मानं सोऽहम्भावेन भावयेत्।।
तदेकतानतासिद्धिः समाधिः परमो मतः।।२३।।

परब्रह्म महालिङ्गं प्राणो जीवः प्रकीर्तितः।
तदेकभावमननात् समाधिस्थः प्रकीर्तितः।।२४।।

अन्तः षट्चक्ररूढानि पङ्कजानि विभावयेत्।
ब्रह्मादिस्थानभूतानि भ्रूमध्यान्तानि मूलतः।।२५।।

भ्रूमध्यादूर्ध्वभागे तु सहस्त्रदलमम्बुजम्।
भावयेत्तत्र विमलं चन्द्रबिम्बं तदन्तरे।।२६।।

सूक्ष्मरन्ध्रं विजानीयात् तत् कैलासपदं विदुः।
तत्रस्थं भावयेच्छम्भुं सर्वकारणकारणम्।।२७।।

बहिर्वासनया विश्वं विकल्पार्थं प्रकाशते।
अन्तर्वासितचित्तानामात्मानन्दः प्रकाशते।।२८।।

आत्मारणिसमुत्थेन प्रमोदमथनात् सुधीः।
ज्ञानाग्निना दहेत्सर्वं पाशजालं जगन्मयम्।।२९।।

संसारविषवृक्षस्य पञ्चक्लेशपलाशिनः।

छेदने कर्ममूलस्य परशुः शिवभावना।।३०।।

अज्ञानराक्षसोन्मेषकारिणः  संहृतात्मनः।
शिवध्यानं तु संसारतमसश्चण्डभास्करः।।३१।।

स्वान्तस्थ-शिवलिङ्गस्य प्रत्यक्षानुभवस्थितिः।
या सैव परलिङ्गस्य निजमित्युच्यते बुधैः।।३२।।

ब्रह्मविष्णवादयो देवाः सर्वे वेदादयस्तथा।
लीयन्ते यत्र गम्यन्ते तल्लिङ्गं ब्रह्म केवलम्।।३३।।

चिदानन्दमयः साक्षाच्छिव एव निरञ्जनः।
लिङ्गमित्युच्यते नान्यद्यतः स्याद्विश्वसम्भवः।।३४।।

बहुनात्र किमुक्तेन लिङ्गमित्युच्यते बुधैः।
शिवाभिधं परं ब्रह्म चिद्रूपं जगदास्पदम्।।३५।।

वेदान्तवाक्यजां विद्यां लिङ्गमाहुस्तथापरे।
तदसज्ज्ञेयरूपत्वाल्लिङ्गस्य ब्रह्मरूपिणः।।३६।।

अव्यक्तं लिङ्गमित्याहुर्जगतां मूलकारणम्।
लिङ्गी महेश्वरश्चेति मतमेतदसङ्गतम्।।३७।।

न सूर्यो भाति तत्रेन्दुर्न विद्युन्न च पावकः।
न तारका महालिङ्गे द्योतमाने परात्मनि।।३८।।

ज्योतिर्मयं परं लिङ्गं श्रुतिराह शिवात्मकम्।
तस्य भासा सर्वमिदं प्रतिभाति न संशयः।।३९।।

लिङ्गान्नास्ति परं तत्त्वं यदस्माज्जायते जगत्।
यदेतद्रूपतां धत्ते यदत्र लयमश्नुते।।४०।।

तस्माल्लिङ्गं परं ब्रह्म सच्चिदानन्दलक्षणम्।
निजरूपमिति ध्यानात् तदवस्था प्रजायते।।४१।।

ज्ञानमङ्गमिति प्राहुर्ज्ञेयं लिङ्गं सनातनम्।
विद्यते तद्द्वयं यस्य सोऽङ्गलिङ्गीति कीर्तितः।।४२।।

अङ्गे लिङ्गं समारूढं लिङ्गे चाङ्गमुपस्थितम्।
एतदस्ति द्वयं यस्य स भवेदङ्गलिङ्गवान्।।४३।।

ज्ञात्वा यः सततं लिङ्गं स्वान्तःस्थं ज्योतिरात्मकम्।
पूजयेद्भावयेन्नित्यं तं विन्द्यादङ्गलिङ्गिनम्।।४४।।

ज्ञायते लिङ्गमेवैकं सर्वैः शास्त्रैः सनातनैः।
ब्रह्मेति विश्वधामेति विमुक्तेः पदमित्यपि।।४५।।

मुक्तिरूपमिदं लिङ्गमिति यस्य मनःस्थितिः।
स मुक्तो देहयोगेऽपि स ज्ञानी स महागुरुः।।४६।।

अनादिनिधनं लिङ्गं कारणं जगतामिति।
ये न जानन्ति ते मूढा मोक्षमार्गबहिष्कृताः।।४७।।

यः प्राणलिङ्गार्चनभावपूर्वैः
धर्मैरुपेतः शिवभावितात्मा।
स एव तुर्यः परिकीर्तितोऽसौ
संविद्विपाकाच्छरणाभिधानः ।।४८।।

## ।।त्रयोदशः परिच्छेदः।।

माहेश्वरः प्रसादीति प्राणलिङ्गीति बोधितः।
कथमेष समादिष्टः पुनः शरणसंज्ञकः?।।१।।

अङ्गलिङ्गी ज्ञानरूपः सतीज्ञेयः शिवः पतिः।
यत्सौख्यं तत्समावेशे तद्वान् शरणनामवान्।।२।।

स्थलमेतत् समाख्यातं चतुर्धा धर्मभेदतः।
आदौ शरणमाख्यातं ततस्तामसवर्जनम्।।३।।

ततो निर्देशमुद्दिष्टं शीलसम्पादनं ततः।
क्रमाल्लक्षणमेतेषां कथयामि निशाम्यताम्।।४।।

सतीव रमणे यस्तु शिव-शक्तिं विभावयन्।
तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान्।।५।।

परिज्ञाते शिवे साक्षात् को वान्यमभिकाङ्क्षति?।
निधाने महति प्राप्ते कः काचं याचतेऽन्यतः?।।६।।

शिवानन्दं समासाद्य को वान्यमुपतिष्ठते?।
गङ्गामृतं परित्यज्य कः काङ्क्षेन्मृगतृष्णिकाम्?।।७।।

संसारतिमिरच्छेदे विना शङ्करभास्करम्।
प्रभवन्ति कथं देवाः खद्योता इव देहिनाम्?।।८।।

संसारार्तः शिवं यायाद् ब्रह्माद्यैः किं फलं सुरैः?।
चकोरस्तृषितः पश्येच्चन्द्रं किं तारका अपि?।।९।।

शिव एव समस्तानां शरण्यः शरणार्थिनाम्।
संसारोरगदष्टानां सर्वज्ञः सर्वदोषहा।।१०।।

शिवज्ञाने समुत्पन्ने परानन्दः प्रकाशते।
तदासक्तमना योगी नान्यत्र रमते सुधीः।।११।।

तस्मात् सर्वप्रयत्नेन शङ्करं शरणं गतः।
तदनन्तसुखं प्राप्य मोदते नान्यचिन्तया।।१२।।

शिवासक्तपरानन्दमोदिना - गुरुणा यतः।
निरस्यन्ते तमोभावाः स तामसनिरासकः।।१३।।

यस्य ज्ञानं तमोमिश्रं न तस्य गतिरिष्यते।
सत्त्वं हि ज्ञानयोगस्य नैर्मल्यं विदुरुत्तमाः।।१४।।

शमो दमो विवेकश्च वैराग्यं पूर्णभावना।
क्षान्तिः कारुण्यसम्पत्तिः श्रद्धा सत्यसमुद्भवा।।१५।।

शिवभक्तिः परो धर्मः शिवज्ञानस्य बान्धवाः।
एतैर्युक्तो महायोगी सात्त्विकः परिकीर्तितः।।१६।।

कामक्रोधमहामोहमदमात्सर्य – वारणाः।
शिवज्ञानमृगेन्द्रस्य कथं तिष्ठन्ति सन्निधौ?।।१७।।

यत्र कुत्रापि वा द्वेष्टि प्रपञ्चे शिवरूपिणि।
शिवद्वेषी स विज्ञेयो रजसाविष्टमानसः।।१८।।

यो द्वेष्टि सकलान् लोकान् यो वाहङ्कुरुते सदा।
योऽसत्यभावनायुक्तः स तामस इति स्मृतः।।१९।।

तमोमूला हि सञ्जाता रागद्वेषादिपादपाः।
शिवज्ञानकुठारेण छेद्यन्ते हि निरन्तरम्।।२०।।

शिवज्ञाने समुत्पन्ने सहस्रादित्यसन्निभे।
कुतस्तमोविकाराः स्युर्महतां शिवयोगिनाम्।।२१।।

निराकृत्य तमोभागं संसारस्य प्रवर्तकम्।
निर्दिश्यते तु यज्ज्ञानं स निर्देश इति स्मृतः।।२२।।

गुरुरेव परं तत्त्वं प्रकाशयति देहिनाम्।
को वा सूर्यं विना लोके तमसो विनिवर्तकः?।।२३।।

अन्तरेण गुरुं सिद्धं कथं संसारनिष्कृतिः?।
निदानज्ञं विना वैद्यं किं वा रोगो निवर्तते?।।२४।।

अज्ञानमलिनं चित्तदर्पणं यो विशोधयेत्।
प्रज्ञाविभूतियोगेन   तमाहुर्गुरुसत्तमम्।।२५।।

अपरोक्षिततत्त्वस्य जीवन्मुक्तस्वभाविनः।
गुरोः कटाक्षे संसिद्धे को वा लोकेषु दुर्लभः?।।२६।।

कैवल्यकल्पतरवो गुरवः करुणालयाः।
दुर्लभा हि जगत्यस्मिन् शिवाद्वैतपरायणाः।।२७।।

क्षीराब्धिरिव सिन्धूनां सुमेरुरिव भूभृताम्।
ग्रहाणामिव तिग्मांशुर्मणीनामिव कौस्तुभः।।२८।।

द्रुमाणामिव भद्रश्रीर्देवानामिव शङ्करः।
गुरुः शिवः परःश्लाघ्यो गुरूणां प्राकृतात्मनाम्।।२९।।

जिज्ञासा शिवतत्त्वस्य शीलमित्युच्यते बुधैः।
निर्देश्ययोगादार्याणां तद्वान् शीलीति कथ्यते।।३०।।

प्रपन्नार्तिहरे देवे परमात्मनि शङ्करे।

भावस्य स्थिरतायोगः शीलमित्युच्यते बुधैः।।३१।।

शीलं शिवैकविज्ञानं शिवध्यानैकतानता।
शिवप्राप्तिसमुत्कण्ठा तद्योगी शीलवान् स्मृतः।।३२।।

शिवादन्यत्र विज्ञाने वैमुख्यं यस्य सुस्थिरम्।
तदासक्तमनोवृत्तिस्तमाहुः शीलभाजनम्।।३३।

पतिव्रताया यच्छीलं पतिरागात् प्रशस्यते।
तथा शिवानुरागेण सुशीलोऽभक्त उच्यते।।३४।।

पतिं विना यथा स्त्रीणां सेवान्यस्य तु गर्हणा।
शिवं विना तथान्येषां सेवा निन्द्या कृतात्मनाम्।।३५।।

बहुनात्र किमुक्तेन शिवज्ञानैकनिष्ठता।
शीलमित्युच्यते सद्भिः शीलवांस्तत्परो मतः।।३६।।

शिवात्मबोधैकरतः स्थिराशयः
शिवं प्रपन्नो जगतामधीशम्।
शिवैकनिष्ठाहितशीलभूषणः ।
शिवैक्यवानेव हि कथ्यते बुधैः।।३७।।

## ।।चतुर्दशः परिच्छेदः।।

तामसत्यागसम्बन्धान्निर्देशाच्छीलतस्तथा ।
शरणाख्यस्य भूयोऽस्य कथमैक्यनिरूपणम्।।१।।

प्राणलिङ्गादियोगेन सुखातिशयमेयिवान्।
शरणाख्यः शिवेनैक्यभावनादैक्यवान् भवेत्।।२।।

ऐक्यस्थलमिदं प्रोक्तं चतुर्धा मुनिपुङ्गव।
ऐक्यमाचारसम्पत्तिरेक - भाजनमेव च।।
विषयानन्दकणिकानिःस्पृहो निर्मलाशयः।
शिवानन्दमहासिन्धुमज्जनादैक्यमुच्यते ।।४।।

निर्धूतमलसम्बन्धो निष्कलङ्कमनोगतः।
शिवोऽहमिति भावेन निरूढो हि शैवैक्यताम्।।५।।

शिवेनैक्यं समापन्नश्चिदानन्दस्वरूपिणा।
न पश्यति जगज्जालं मायाकल्पितवैभवम्।।६।।

ब्रह्माण्डबुद्बुदोद्भेदविजृम्भी तत्त्ववीचिमान्।
मायासिन्धुर्लयं याति शिवैक्यवडवानले।।७।।

मायाशक्तितिरोधानाच्छिवे भेदविकल्पना।
आत्मनस्तद्विनाशे तु नाद्वैतात्किञ्चिदिष्यते।।८।।

पशुत्वं च पतित्वं च मायामोहविकल्पितम्।
तस्मिन् प्रलयमापन्ने कः पशुः? को नु वा पतिः?।।९।।

घोरसंसारसर्पस्य भेदवल्मीकशायिनः।
बाधकं परमाद्वैतभावना परमौषधम्।।१०।।

भेदबुद्धिसमुत्पन्नमहासंसारसागरम् ।
अद्वैतबुद्धिपोतेन समुत्तरति देशिकः।।११।।

अज्ञानतिमिरोद्रिक्ता कामरक्षःक्रियाकरी।
संसारकालरात्रिस्तु नश्येदद्वैतभानुना।।१२।।

तस्मादद्वैतभावस्य सदृशो नास्ति योगिनाम्।
उपायो घोरसंसारमहाताप - निवृत्तये।।१३।।

अद्वैतभावनाजातं क्षणमात्रेऽपि यत्सुखम्।
तत्सुखं कोटिवर्षेण प्राप्यते नैव भोगिभिः।।१४।।

चित्तवृत्ति - समालीनजगतः शिवयोगिनः।
शिवानन्दपरिस्फूर्तिर्मुक्तिरित्यभिधीयते ।।१५।।

शिवैकभावनापन्नशिवत्वो देहवानपि।
देशिको हि न लिप्येत स्वाचारैः सूतकादिभिः।।१६।।

शिवाद्वैत-परिज्ञाने स्थिते यति मनस्विनाम्।
कर्मणा किंतु भाव्यं स्यादकृतेन कृतेन वा?।।१७।।

शम्भोरेकत्वभावेन सर्वत्र समदर्शनः।
कुर्वन्नपि महाकर्म न तत्फलमवाप्नुयात्।।१८।।

सुकृती दुष्कृती वापि ब्राह्मणो वान्त्यजोऽपि वा।
शिवैकभावयुक्तानां सदृशो भवति ध्रुवम्।।१९।।

वर्णाश्रमसदाचारैर्ज्ञानिनां किं प्रयोजनम्?।
लौकिकस्तु सदाचारः फलाभावेऽपि भाव्यते।।२०।।

निर्दग्धकर्मबीजस्य निर्मलज्ञानवह्निना।
देहिवद् भासमानस्य देहयात्रा तु लौकिकी।।२१।।

शिवज्ञानसमापन्नस्थिरवैराग्यलक्षणः ।
स्वकर्मणा न लिप्येत पद्मपत्रमिवाम्भसा।।२२।।

गच्छंस्तिष्ठन् स्वपन् वापि जाग्रद् वापि महामतिः।
शिवज्ञान-समायोगाच्छिवपूजापरः सदा।।२३।।

यद्यत् पश्यति सामोदं वस्तु लोकेषु देशिकः।
शिवदर्शनसम्पत्तिस्तत्र तत्र महात्मनः।।२४।।

यद्यच्चिन्तयते योगी मनसा शुद्धभावनः।
तत्तच्छिवमयत्वेन शिवध्यानमुदाहृतम्।।२५।।

यत्किञ्चित् भावितं लोके स्वेच्छया शिवयोगिना।
शिवस्तोत्रमिदं सर्वं यस्मात् सर्वात्मकः शिवः।।२६।।

या या चेष्टा समुत्पन्ना जायते शिवयोगिनाम्।
सा सा पूजा महेशस्य सर्वदा तद्गतात्मनाम्।।२७।।

विश्वं शिवमयं चेति सदा भावयतो धिया।
शिवैक - भाजनात्मत्वादेकभाजनमुच्यते।।२८।।

स्वस्य सर्वस्य लोकस्य शिवस्याद्वैतदर्शनात्।
एकभाजनयोगेन प्रसादैक्यमतिर्भवेत्।।२९।।

शिवे विश्वमिदं सर्वं शिवः सर्वत्र भासते।
आधाराधेयभावेन शिवस्य जगतः स्थितिः।।३०।।

चिदेकभाजनं यस्य चित्तवृत्तेः शिवात्मकम्।

नान्यत् तस्य किमेतेन मायामूलेन वस्तुना?।।३१।।

चित् प्रकाशयते विश्वं तद्विना नास्ति वस्तु हि।
चिदेकनिष्ठचित्तानां किं मायापरिकल्पितैः?।।३२।।

वृत्तिशून्ये स्वहृदये शिवलीने निराकुले।
यः सदा वर्तते योगी स मुक्तो नात्र संशयः।।३३।।

गुरोः शिवस्य शिष्यस्य स्वस्वरूपतया स्मृतिः।
सहभोजनमाख्यातं सर्वग्रासात्मभावतः।।३४।।

शिवं विश्वं गुरुं साक्षात् योजयेन्नित्यमात्मनि।
एकत्वेन चिदाकारे तदिदं सहभोजनम्।।३५।।

अयं शिवो गुरुश्चैव जगदेतच्चराचरम्।
अहञ्चेति मतिर्यस्य नास्त्यसौ विश्वभोजकः।।३६।।

अहं भृत्यः शिवः स्वामी शिष्योऽहं गुरुरेव वै।
इति यस्य मतिर्नास्ति स चाद्वैतपदे स्थितः।।३७।।

पराहन्तामये स्वात्मपावके विश्वभास्वति।
इदन्ताहव्यहोमेन विश्वहोमीति कथ्यते।।३८।।

अहं शिवो गुरुश्चाहमहं विश्वं चराचरम्।
यया विज्ञायते सम्यक् पूर्णाहन्तेति सा स्मृता।।३९।।

आधारवह्नौ चिद्रूपे भेदजातं जगद्धविः।
जुहोति ज्ञानयज्वा यः स ज्ञेयो विश्वहव्यभुक्।।४०।।

चिदाकारे पराकाशे परमानन्दभास्वति।
विलीन-चित्तवृत्तीनां का वा विश्वक्रमस्थितिः?।।४१।।

निरस्तविश्वसम्बाधे निष्कलङ्के चिदम्बरे।
भावयेल्लीनमात्मानं सामरस्यस्वभावतः।।४२।।

सैषा विद्या परा ज्ञेया सत्तानन्दप्रकाशिनी।
मुक्तिरित्युच्यते सद्भिर्जगन्मोहनिवर्तिनी।।४३।।

भक्तादिधामार्पित - धर्मयोगात्
प्राप्तैकभावः परमाद्भुतेन।
शिवेन चिद्व्योममयेन साक्षान्-
मोक्षश्रियो भाजनतामुपैति।।४४।।

# ।।पञ्चदशः परिच्छेदः।।

षट्स्थलोक्तसदाचारसम्पन्नस्य  यथाक्रमम्।
लिङ्गस्थलानि कथ्यन्ते जीवन्मुक्तिपराणि च।।१।।

भक्ताद्यैक्यावसानानि षडुक्तानि स्थलानि च।
लिङ्गस्थलानि कानीह कथ्यन्ते कति वा पुनः।।२।।

गुर्वादिज्ञानशून्यान्ता भक्तादिस्थलसंश्रिताः।
स्थलभेदाः प्रकीर्त्यन्ते पञ्चाशत् सप्त चाधुना।।३।।

आदौ नवस्थलानीह भक्तस्थलसमाश्रयात्।
कथ्यन्ते गुणसारेण नामान्येषां पृथक् शृणु।।४।।

दीक्षागुरुस्थलं पूर्वं ततः शिक्षागुरुस्थलम्।
प्रज्ञागुरुस्थलं चाथ क्रियालिङ्गस्थलं ततः।।५।।

भालिङ्गस्थलं चाथ ज्ञानलिङ्गस्थलं ततः।
स्वयं परं चरं चेति तेषां लक्षणमुच्यते।।६।।

दीयते परमं ज्ञानं क्षीयते पाशबन्धनम्।
यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः।।७।।

गुणातीतं गुकारं च रूपातीतं रुकारकम्।
गुणातीतमरूपं च यो दद्यात् स गुरुः स्मृतः।।८।।

आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यलम्।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते।।९।।

षडध्वातीतयोगेन यतते यस्तु देशिकः।
मायाब्धितरणोपाय-हेतुर्विश्वगुरुः शिवः।।१०।।

अखण्डं येन चैतन्यं व्यज्यते सर्ववस्तुषु।
आत्मयोगप्रभावेण स गुरुर्विश्वभासकः।।११।।

दीक्षागुरुरसौ शिक्षाहेतुः शिष्यस्य बोधकः।
प्रश्नोत्तरप्रवक्ता च शिक्षागुरुरितीर्यते।।१२।।

बोधकोऽयं समाख्यातो बोध्यमेतदिति स्फुटम्।
शिष्ये नियुज्यते येन स शिक्षागुरुरुच्यते।।१३।।

संसारतिमिरोन्माथिशरच्चन्द्रमरीचयः  ।
वाचो यस्य प्रवर्तन्ते तमाचार्यं प्रचक्षते।।१४।।

ददाति यः पतिज्ञानं जगन्मायानिवर्तकम्।
अद्वैतवासनोपायं तमाचार्यवरं विदुः।।१५।।

पूर्वपक्षं समादाय जगद्भेदविकल्पनम्।
अद्वैतकृतसिद्धान्तो गुरुरेष गुणाधिकः।।१६।।

सन्देहवनसन्दोहसमुच्छेदकुठारिका ।
यत्सूक्तिधारा विमला स गुरूणां शिखामणिः।।१७।।

यत्सूक्तिदर्पणाभोगे निर्मले दृश्यते सदा।
मोक्षश्रीर्बिम्बरूपेण स गुरुर्भवतारकः।।१८।।

शिष्याणां हृदयालेख्यं प्रद्योतयति यः स्वयम्।
ज्ञानदीपिकयानेन गुरुणा कः समो भवेत्?।।१९।।

परमाद्वैतविज्ञानपरमौषधिदानतः ।
संसाररोगनिर्माथी देशिकः केन लभ्यते?।।२०।।

उपदेष्टोपदेशानां संशयच्छेदकारकः।
सम्यग्ज्ञानप्रदः साक्षादेष ज्ञानगुरुः स्मृतः।।२१।।

निरस्तविश्वसम्भेदं निर्विकारं चिदम्बरम्।
साक्षात्करोति यो युक्त्या स ज्ञानगुरुरुच्यते।।२२।।

कलङ्कवानसौ चन्द्रः क्षयवृद्धिपरिप्लुतः।
निष्कलङ्कस्थितो ज्ञानचन्द्रमा निर्विकारवान्।।२३।।

पार्श्वस्थतिमिरं हन्ति प्रदीपो मणिनिर्मितः।
सर्वगामि तमो हन्ति बोधदीपो निरङ्कुशः।।२४।।

सर्वार्थसाधकज्ञानविशेषादेश – तत्परः।
ज्ञानाचार्यः समस्तानामनुग्रहकरः शिवः।।२५।।

कटाक्षचन्द्रमा यस्य ज्ञानसागरवर्धकः।
संसार – तिमिरच्छेदी स गुरुर्ज्ञानपारगः।।२६।।

बहिस्तिमिरविच्छेत्ता भानुरेष प्रकीर्तितः।
बहिरन्तस्तमश्छेदी विभुर्देशिकभास्करः।।२७।।

कटाक्षलेशमात्रेण विना ध्यानादिकल्पनम्।
शिवत्वं भावयेद्यत्र स वेदः शाम्भवो मतः।।२८।।

शिववेदकरे ज्ञाने दत्ते येन सुनिर्मले।
जीवन्मुक्तो भवेच्छिष्यः स गुरुर्ज्ञानसागरः।।२९।।

गुरोर्विज्ञानयोगेन क्रिया यत्र विलीयते।
तत्क्रियालिङ्गमाख्यातं सर्वैरागमपारगैः।।३०।।

परानन्दचिदाकारं परब्रह्मैव केवलम्।

लिङ्गं सद्रूपतापन्नं लक्ष्यते विश्वसिद्धये।।३१।।

लिङ्गमेव परं ज्योतिर्भवति ब्रह्म केवलम्।
तस्मात् तत्पूजनादेव सर्वकर्मफलोदयः।।३२।।

परित्यज्य क्रियाः सर्वा लिङ्गपूजैकतत्पराः।
वर्तन्ते योगिनः सर्वे तस्माल्लिङ्गं विशिष्यते।।३३।।

यज्ञादयः क्रियाः सर्वा लिङ्गपूजांशसम्मिताः।
इति यत्पूज्यते सिद्धैस्तत्क्रियालिङ्गमुच्यते।।३४।।

किं यज्ञैरग्निहोत्राद्यैः? किं तपोभिश्च दुष्करैः?।
लिङ्गार्चनरतिर्यस्य स सिद्धः सर्वकर्मसु।।३५।।

ब्रह्मविष्ण्वादयः सर्वे विबुधा लिङ्गमाश्रिताः।
सिद्धाः स्वस्वपदे भान्ति जगत्तन्त्राधिकारिणः।।३६।।

क्रिया यथा लयं प्राप्ता तथा भावोऽपि लीयते।
यत्र तद्देशिकैरुक्तं भावलिङ्गमिति स्फुटम्।।३७।।

भावेन गृह्यते देवो भगवान् परमः शिवः।
किं तेन क्रियते तस्य नित्यपूर्णो हि स स्मृतः।।३८।।

अखण्डपरमानन्दबोधरूपः परः शिवः।
भक्तानामुपचारेण भावयोगात् प्रसीदति।।३९।।

मृच्छिलाविहिताल्लिङ्गाद् भावलिङ्गं विशिष्यते।
निरस्तसर्वदोषत्वाद् ज्ञानमार्गप्रवेशनात्।।४०।।

विहाय बाह्यलिङ्गानि चिल्लिङ्गं मनसि स्मरन्।
पूजयेद् भावपुष्पैर्यो भावलिङ्गीति कथ्यते।।४१।।

मूलाधारेऽथवा चित्ते भ्रूमध्ये वा सुनिर्मलम्।
दीपाकारं यजन् लिङ्गं भावद्रव्यैः स योगवान्।।४२।।

स्वानुभूतिप्रमाणेन ज्योतिर्लिङ्गेन संयुतः।
शिलामृद्दारुसम्भूतं न लिङ्गं पूजयत्यसौ।।४३।।

क्रियारूपा तु या पूजा सा ज्ञेया स्वल्पसंविदाम्।
आन्तरा भावपूजा तु शिवस्य ज्ञानिनां मता।।४४।।

तद्भावज्ञापकं ज्ञानं लयं यत्र समश्नुते।
तज्ज्ञानलिङ्गमाख्यातं शिवतत्त्वार्थकोविदैः।।४५।।

त्रिमूर्तिभेद – निर्मूलं त्रिगुणातीतवैभवम्।
ब्रह्म यद् बोध्यते तत्तु ज्ञानलिङ्गमुदाहृतम्।।४६।।

स्थूले क्रियासमापत्तिः सूक्ष्मे भावस्य सङ्गमः।
स्थूलसूक्ष्मपदातीते ज्ञानमेव परात्मनि।।४७।।

कल्पितानि हि रूपाणि स्थूलानि परमात्मनः।
सूक्ष्माण्यपि च तैः किं वा? परबोधं समाचरेत्।।४८।।

परात्परं तु यद्ब्रह्म परमानन्दलक्षणम्।
शिवाख्यं ज्ञायते येन ज्ञानलिङ्गीति कथ्यते।।४९।।

'परात्परतरं ब्रह्म तत्परात्परतो हरिः।
यत्परात्परतोऽधीशं तन्मे मनः शिवसङ्कल्पमस्तु।।'

'परात्परतरं चैव तत्पराच्चैव यत्परम्।
तत्परात्परतो ज्ञेयं तन्मे मनः शिवसङ्कल्पमस्तु।।'

बाह्यक्रियां परित्यज्य चिन्तामपि च मानसीम्।
अखण्डज्ञानरूपत्वं यो भजेन्मुक्त एव सः।।५०।।

तद्भावज्ञापकज्ञानं यत्र ज्ञाने लयं व्रजेत्।
तद्धानेष समाख्यातः स्वाभिधानो मनीषिभिः।।५१।।

स्वच्छन्दाचारसन्तुष्टो ज्योतिर्लिङ्गपरायणः।
आत्मस्थसकलाकारः स्वाभिधो मुनिसत्तमः।।५२।।

निर्ममो निरहङ्कारो निरस्तक्लेशपञ्चकः।
भिक्षाशी समबुद्धिश्च मुक्तप्रायो मुनिर्भवेत्।।५३।।

यदृच्छालाभसन्तुष्टो भस्मनिष्ठो जितेन्द्रियः।
समवृत्तिर्भवेद्योगी भिक्षुके वा नृपेऽथवा।।५४।।

पश्यन् सर्वाणि भूतानि संसारस्थानि सर्वशः।
स्मयमानः परानन्दे लीनात्मा वर्तते सुधीः।।५५।।

ध्यानं शैवं तथा ज्ञानं भिक्षा चैकान्तशीलता।
यतेश्चत्वारि कर्माणि न पञ्चममिहेष्यते।।५६।।

स्वरूपज्ञानसम्पन्नो ध्वस्ताहंममताकृतिः।
सर्वमेव स्वयं भूत्वा चरतीति चराभिधः।।५७।।

कामक्रोधादिनिर्मुक्तः शान्तिदान्तिसमन्वितः।
समबुद्ध्या चरेद्योगी सर्वत्र शिवबुद्धिमान्।।५८।।

इदं मुख्यमिदं हीनमिति चिन्तामकल्पयन्।
सर्वत्र सञ्चरेद्योगी सर्वं ब्रह्मेति भावयन्।।५९।।

न सम्मानेषु सम्प्रीतिं नावमानेषु च व्यथाम्।

कुर्वाणः सञ्चरेद्योगी कूटस्थे स्वात्मनि स्थितः।।६०।।

अप्राकृतैर्गुणैः स्वीयैः सर्वं विस्मापयन् जनम्।
अद्वैतपरमानन्दमुदितो देहिवच्चरेत्।।६१।।

न प्रपञ्चे निजे देहे न धर्मे न च दुष्कृते।
गतवैषम्यधीर्धीरो यतिश्चरति देहिवत्।।६२।।

प्राकृतैश्वर्यसम्पत्तिपराङ्मुखमनः - स्थितिः।
चिदानन्दनिजात्मस्थो मोदते मुनिपुङ्गवः।।६३।।

स्वयमेव स्वयं भूत्वा चरतः स्वस्वरूपतः।
परं नास्तीति बोधस्य परत्वमभिधीयते।।६४।।

स्वतन्त्रः सर्वकृत्येषु स्वं परत्वेन भावितः।
तृणीकुर्वन् जगज्जालं वर्तते शिवयोगिराट्।।६५।।

वर्णाश्रमसमाचारमार्गनिष्ठापराङ्मुखः ।
सर्वोत्कृष्टं स्वमात्मानं पश्यन् योगी तु मोदते।।६६।।

विश्वातीतं परब्रह्म शिवाख्यं चित्स्वरूपकम्।
तदेवाहमिति ज्ञानी सर्वोत्कृष्टः स उच्यते।।६७।।

अचलं ध्रुवमात्मानमनुपश्यन् निरन्तरम्।
निरस्तविश्वविभ्रान्तिर्जीवन्मुक्तो भवेन्मुनिः।।६८।।

ब्रह्माद्याः किं नु कुर्वन्ति देवताः कर्ममार्गगाः?।
कर्मातीतपदस्यास्य स्वयं ब्रह्मस्वरूपिणः।।६९।।

स्वेच्छया सञ्चरेद् योगी विमुञ्चद् देहमानिताम्।
दर्शनैः स्पर्शनैः सर्वानज्ञानपि विमोचयेत्।।७०।।

नित्ये निर्मलभावने निरुपमे निर्धूतविश्वभ्रमे
सत्तानन्दचिदात्मके परशिवे साम्यं गतः संयमी।
प्रध्वस्ताश्रमवर्णधर्मनिगलः स्वच्छन्दसञ्चारवान्।
देहीवाद्भुतवैभवो विजयते जीवन्विमुक्तः सुधीः।।७१।।

## ।।षोडशः परिच्छेदः।।

स्थलानां नवकं प्रोक्तं भक्तस्थलसमाश्रयम्।
माहेश्वरस्थले सिद्धं स्थलभेदं वदस्व मे।।१।।

माहेश्वरस्थले सन्ति स्थलानि नव तापस!।
क्रियागमस्थलं पूर्वं ततो भावागमस्थलम्।।२।।

ज्ञानागमस्थलं चाथ सकायस्थलमीरितम्।
ततोऽकायस्थलं प्रोक्तं परकायस्थलं ततः।।३।।

धर्माचारस्थलं चाथ भावाचारस्थलं ततः।
ज्ञानाचारस्थलं चेति क्रमादेषां भिदोच्यते।।४।।

शिवो हि परमः साक्षात् पूजा तस्य क्रियोच्यते।
तत्परा आगमा यस्मात् तदुक्तोऽयं क्रियागमः।।५।।

प्रकाशते यथा नाग्निररण्यां मन्थनं विना।
क्रियां विना तथान्तःस्थो न प्रकाशो भवेच्छिवः।।६।।

न यथा विधिलोपः स्याद्यथा देवः प्रसीदति।
यथागमः प्रमाणं स्यात् तथा कर्म समाचरेत्।।७।।

विधिः शिव नियोगोऽयं तस्माद् विहितकर्मणि।
शिवाराधनबुद्ध्यैव निरतः स्यात् विचक्षणः।।८।।

गुरोरादेशमासाद्य पूजयेत्परमेश्वरम्।
पूजिते परमेशाने पूजिताः सर्वदेवताः।।९।।

सदा शिवार्चनोपाय - सामग्रीव्यग्रमानसः।
शिवयोगरतो योगी मुच्यते नात्र संशयः।।१०।।

अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी।
फलोत्पत्तौ विरक्तस्य तस्मात् तद्द्वयमाचरेत्।।११।।

ज्ञाने सिद्धेऽपि विदुषां कर्मापि विनियुज्यते।
फलाभिसन्धिरहितं तस्मात्कर्म न सन्त्यजेत्।।१२।।

आचार एव सर्वेषामलङ्काराय कल्प्यते।
आचारहीनः पुरुषो लोके भवति निन्दितः।।१३।।

ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम्।।१४।।

भावचिह्नानि विदुषो यानि सन्ति विरागिणः।
तानि भावागमत्वेन वर्तन्ते सर्वदेहिनाम्।।१५।।

शिवोऽहमिति भावोऽपि शिवतापत्तिकारणम्।
न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत्।।१६।।

ज्ञानं वस्तु परिच्छेदो ध्यानं तद्भावकारणम्।
तस्माज्ज्ञाते महादेवे ध्यानयुक्तो भवेत्सुधीः।।१७।।

अन्तर्बहिश्च सर्वत्र परिपूर्णं महेश्वरम्।
भावयेत्परमान्दलब्धये पण्डितोत्तमः।।१८।।

अर्थहीना यथावाणी पतिहीना यथा सती।
श्रुतिहीना यथा बुद्धिर्भावहीना तथा क्रिया।।१९।।

चक्षुर्हीनो यथा रूपं न किञ्चिदीक्षितुं क्षमः।
भावहीनस्तथा योगी न शिवं द्रष्टुमीश्वरः।।२०।।

भावशुद्धेन मनसा पूजयेत् परमेष्ठिनम्।
भावहीनां न गृह्णाति पूजां सुमहतीमपि।।२१।।

नैरन्तर्येण सम्पन्ने भावे ध्यातुं शिवं प्रति।
तद्भावो जायते तद्वत् क्रिमेः कीटस्य चिन्तनात्।।२२।।

निष्कलङ्कं निराकारं परब्रह्म शिवाभिधम्।
निर्ध्यातुमसर्थोऽपि तद्विभूतिं विभावयेत्।।२३।।

परस्य ज्ञानचिह्नानि यानि सन्ति शरीरिणाम्।
तानि ज्ञानागमत्वेन प्रवर्तन्ते विमुक्तये।।२४।।

भावेन किं फलं पुंसां कर्मणा वा किमिष्यते?।
भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम्।।२५।।

केवलं कर्ममात्रेण जन्मकोटिशतैरपि।
नात्मनां जायते मुक्तिर्ज्ञानं मुक्तेर्हि कारणम्।।२६।।

ज्ञानहीनं सदाकर्म पुंसां संसारकारणम्।
तदेव ज्ञानयोगेन संसारविनिवर्तकम्।।२७।।

फलं क्रियावतां पुंसां स्वर्गाद्यं नश्वरं यतः।
तस्मात् स्थायिफलप्राप्त्यै ज्ञानमेव समभ्यसेत्।।२८।।

शास्त्राभ्यासादियत्नेन सद्गुरोरुपदेशतः।
ज्ञानमेव समभ्यस्येत् किमन्येन प्रयोजनम्?।।२९।।

ज्ञानं परशिवाद्वैतपरिपाकविनिश्चयः।
येन संसारसम्बन्धविनिवृत्तिर्भवेत् सताम्।।३०।।

शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते।

